ॐ तत्सत् ।

# व्यावहारिक-संस्कृतप्रबोधः ।

## ( प्रथम द्वितीय भागौ )

संस्कृतविद्यागहनारण्यप्रविविक्षूणां संस्कृतसंलापाभिलाषिणाञ्चोपकारार्थम् श्रीमत्परमविद्वद्वर्य्य श्रीदुर्गाप्रसादसूनुना, अलीगढ़राजकीयाङ्ग्लपाठशालाप्रधानसंस्कृताध्यापकेन गौड़वंशीयेन सुखानन्देन त्रिपाठिना विशारदपरीक्षोत्तीर्णेन व्यरचि

सोऽयम् ।

काशीयन्त्रालये त्रिषष्ट्युत्तरैकोनविंशतिशततमेऽब्देमुद्रापित ।



(मूल्य सार्द्धरूपकमेकम्)

# A GUIDE

TO

# COLLOQUIAL SANSKRIT

## IN TWO PARTS

OR

A HELP IN GENERAL SANSKRIT COMPOSITION AND CONVERSATION WITH IMPORTANT GRAMMATICAL NOTES, PROVERBS, SPECIMENS OF LETTERS AND APPLICATIONS ETC , ETC , FOR THE USE OF THE STUDENTS GOING UP FOR THE INTERMEDIATE AND MATRICULATION EXAMINATIONS

BY

PANDIT SUKHANAND TRIPATHI,

DIPLOMATED VISHARAD,

*Head Pandit, Govt High School, Aligarh.*

PRINTED AT THE KASHI PRESS,

BENARES CITY.

# भूमिका।

आज कल कर्मभूमि भारतवर्ष में भी वहुत से ब्राह्मण, क्षत्री, वैश्य प्रायः संस्कारों से भ्रष्ट हुए अपने २ धर्म कर्मों को छोड़ने से दिन पर दिन अधोगति को प्राप्त होते चले जाते हैं। कारण इसका केवल कर्त्तव्य कर्म न जान अकर्मण्य होना है जो शास्त्रावलोकन से जाने जाते थे। शास्त्रज्ञान के लिये संस्कृत विद्या जानने की परमावश्यकता है। पर बालकों की शिक्षा का समुचित प्रबन्ध न होने, यथावत् ब्रह्मचर्य की रक्षा न रहने, बुरी सङ्गति में पड़ने और मन्द भाग्यता के कारण बालावस्था से ही गृहस्थ के सन्देहों में पड़ने से वह तीक्ष्ण बुद्धि, जो व्याकरणादि पट्शास्त्रों के अवगाहन में समर्थ होती थी प्रायः नष्ट होती जारही है। यदि किसी प्रकार से किसी की कुछ रुचि संस्कृत की ओर चली भी तो जहां ग्रन्थों में कठिनता पड़ी और श्रम करने का समय आया आलस्यवश छोड़ बैठे। और बहुतों ने तो संस्कृत पढ़ना भीख मांगने का द्वारही समझ केवल ब्राह्मणों के लिये छोड़ दिया है। परिणाम यह हुआ कि अपने शास्त्र चक्षु न होने से जैसे जिसने बहकाया बहक गये और कुमार्गों व स्वधर्म-विरुद्ध मतों में पड़ गये जिससे कि अपनी जाति, धर्म और जीवन नष्ट को नष्ट कर बैठे। अतएव अल्प काल में थोड़े परिश्रम से संस्कृत विद्या सिखाने के लिये और व्यवहार का अच्छा पण्डित बनाने के लिये व संस्कृत में सम्भाषण व चिट्ठी पत्री लिखने पढ़ने और शास्त्रज्ञान की गति प्राप्त कराने के लिये "व्यावहारिकसंस्कृत-प्रबोध" नाम की यह पुस्तक बनाई गई है जिसके दो भाग हैं। प्रथम भाग में प्रत्येक प्रकार की व्यावहारिक संस्कृत बोलने व लिखने की रीति है दूसरे भाग में आद्योपान्त संस्कृत व्याकरण हिन्दी अनुवाद से समझाया गया है कि जिससे विद्यार्थी को कौमुदी से कहीं अधिक बोध स्वयं हो सक्ता है। यह पुस्तक सर्वसाधारण के हित के लिये और विशेष कर अंग्रेजी के साथ संस्कृत पढ़ने वाले उच्च श्रेणियों के विद्यार्थियों के लिये जिनको कि परीक्षार्थ संस्कृतानुवाद सुन्दर रूप से आना परम आवश्यक है, बनाई गई है। मैं आशा करता हूं कि विद्यार्थी गण व सर्वसाधारण जन इस पुस्तक द्वारा अपने को व अपनी सन्तति को संस्कृतज्ञ बना मेरे परिश्रम को सफल करेंगे।

अन्त में मैं अपने परोपकारि परायण मित्र पं० ज्योतिःस्वरूपशर्मा सम्पादक निगमागम चन्द्रिका (हिन्दी) व महामण्डल समाचार (उर्दू) व धर्मोपदेष्टा श्रीभारतधर्म महामण्डल को कोटिशः धन्यवाद देता हूं कि जिन्होंने इस पुस्तक के छपाने में बहुत कुछ सत्परामर्श दिया है और

प्रूफादि शोधन करने कराने में अनवकाश होने पर भी बड़ी सहायता दी है। तथापि, भूल रह जाना मनुष्य की स्वभावही है अस्तु पुस्तक के अन्त में शुद्धाशुद्धपत्र भी लगवा दिया है। पाठकों को उचित है कि पढ़ने से पहले उसके अनुसार शुद्ध करलें। इति शिवम्।

सुखानन्द त्रिपाठी।

---

## व्यावहारिकसंस्कृतप्रबोध की विषयानुक्रमणिका।

### अथ प्रथमोभागः।



### अथ द्वितीयो भागः।

# PREFACE.

The practice of speaking Sanskrit in India gradually declined during the Mohamadan rule until it became a dead language. Our humble thanks for its revival are specially due to our late lamented Queen-Empress as well as to the present King-Emperor, whose reigns have been marked with the resuscitation of this Aryan language. Now it would be well if every Indian who has any knowledge of Hindi acquired a practical knowledge of Sanskrit himself and teach it to his children before they join an English school. The profoundness of the Sanskrit language is generally admitted. Practical proficiency in Sanskrit is rather difficult to acquire. To supply this long-felt want is the object of the present work. It consits of two parts, I and II of 25 and 18 chapters respectively a brief sketch of which is given below.

The plan adopted is as follows:—

First, the Heading denotes the subjet matter. Secondly, important words of daily use are given. Lastly come the illustrations of Hindi and Sanskrit sentences in common use. The headings will, it is hoped, give the reader an adequate idea of the work. Great pains have been taken to collect and classify, as far as possible, all the important words in daily use with their Sanskrit equivalents. The substantives are put in the singular nominative to show their genders, as it is very difficult to determine gender in Sanskrit. In the same way the roots are given in the present tense (लट्) third person singular (अन्य पुरुष एक वचन) to show their conjugation etc. (गणपद इत्यादि).

There are already several Sanskrit translation books in the market. In my humble opinion, however, they are not

of much help to a student who wishes to acquire a practical knowledge of Sanskrit within a short period It is hoped that the student, who reads this work with a '*Guru*' or studies it himself carefully, will acquire some knowledge of colloquial Sanskrit Sanskrit proverbs letter writing religious principles and duties as well as the mode of Sanskrit translation together with the peculiarities of Sanskrit Grammar

No other Sanskrit translation book will be required upto the Matriculation and F A standards by a student who has thoroughly gone through this book after a preliminary study of my ' A GUIDE TO ANGLO SANSKRIT CONVERSATION FOR BEGINNERS ' At first I intended writing this work in Anglo Sanskrit as I have done with my book for beginners referred to above, but considering that it would then be useful to English knowing students only, I have written it in the present form so that it may be useful to all

I offer a few hints for the benefit of teachers The chapters in the second part dealing with grammatical constructions should be gone through before taking up the book regularly from the beginning and in the first part the words with their synonyms in each chapter should be carefully mastered before using them in sentences

I conclude these remarks with a list of the chapters in both the parts

The names of the chapters in the first part are as follows —(1) Limbs parts etc of the human body (2) Clothes of every kind (3) Ornaments (4) House hold things (5) Vessels and the chief parts of a house (6) Cattle and conveyances (7) Birds (8) Poisonous animals and insects (9) Animals of the forest (10) Animals living in water (11) Things required for students in a school (12) Eatables (13) Words showing family relationships (14)

Caste and occupation of Indians. (15) Certain trees and flowers and Sanskrit numeration. (16) Heavenly bodies and divisions of day and night. (17) Heavenly beings and things and some mysteries of our religion. (18) Kinds of disease. (19) Medicines and weights. (20) Adjectives. (21) Remaining verbs. (22) Definitions of Sanskrit Grammar with English equivalents. (23) Miscellaneous sentences, idiomatic sentences, famous Sanskrit proverbs, shlokas for entertainment on occasions of marriage gatherings. (24) Addresses, letters, applications etc. and the important Sanskrit Metres. (25) The duties to be performed by a man during day and night.

The names of the chapters of the Second part are as follows :—

(1) The rules and examples of the Conjunction of Sanskrit letters (सन्धि). (2) Declension of great many words in common use in all the cases with their derivations (व्युत्पत्ति). (3) Indeclinables with their meanings (अव्ययार्थ). (4) Feminine affixes [स्त्रीप्रत्यय]. (5) Cases of nouns and pronouns with their uses [कारक]. (6) Rules, uses and examples of compounds [समास]. (7) Rules for nominal affixes [तद्धित]. (8) Conjugation [धातुरूप] of many important verbs with all constructions [प्रक्रियारूप] required. (9) Causative verbs [णिजन्त]. (10) Desiderative verbs [सन्नन्त]. (11) Frequentative verbs [यङन्त]. (12) Frequentative verbs rejecting यङ् [यङ्लुगन्त]. (13) Nominal verbs [नामधातु]. (14) Rules for the use of Parasmaipada [परस्मैपद प्रक्रिया]. (15) Rules for the use of [आत्मनेपद प्रक्रिया]. (16) Rules of intransitive passive [भावकर्म] and Passive and Active voices [कर्मकर्तृप्रक्रिया] (17) Rules for the use of Tense and Mood [लकारार्थ प्रक्रिया]. (18) Verbal affixes [कृत्प्रत्यय].

ALIGARH, Sept. 1907. S. N. TRIPATHI.

श्रीगणेशायनमः।

# व्यावहारिकसंस्कृतप्रबोधः।

गोत्राधिराजतनयातनयः सहितः श्रियां¹।
पायात्प्रत्यूहसन्दोहवारणो वारणाननः॥ १॥
अनङ्गशरखिन्नाङ्गीमालिङ्गन्गोपभामिनीम्।
जायतां श्रेयसे वोऽद्य कृष्णः कलितकौस्तुभः॥ २॥
अधीतविद्यानधुनातनांस्तान् विलोक्य तान्²तान् व्यवहारिकोक्तौ
शिष्यान् विनेतुं व्यवहारवाण्यामभाणि वाणी किलदेवतानाम्॥ ३॥
यद्यत्र स्खलितं भवेन्मम कृतौ शोध्यं बुधैरेव तत्।
प्रायासः प्रथमः प्रकल्पित इति ज्ञात्वा दयासागरैः॥
इत्येवं विनतो निवेदयति वो डिम्भः सुखानन्दको।
बालानां किल चेष्टितं गुरुजनानन्दाय सञ्जायते॥ ४॥

## प्रथमोऽध्यायः।

### देह के कुल अङ्ग इत्यादि का वर्णन—देहावयवविशेषाः।

| हिन्दी। | संस्कृत। | हिन्दी। | संस्कृत। |
|---|---|---|---|
| मनुष्य | पुरुषः, पूरुषः, ना, नरः, मर्त्यः। | बाल | केशः, कुन्तलः, कचः, चिकुरः. |
| बालक | बालः, शिशुः, अर्भकः। | रोम | रोमन्, लोमन् (न०) तनूरुहः. |
| स्त्री | नारी, अङ्गना, अबला, वामा, योषित्, (स्त्री)। | मूंछ | गण्डलोमन्, (न०) गुम्फः. |
| | | डाढी | श्मश्रु, (न०) कूर्चम्, मुख-रोमन् (न०). |
| बाँझ | वशा, वन्ध्या. | | |
| चोटी | शिखा, वेणिः (णी), धम्मिल्लः चूडा, कबरी. | सिर | शिरः (न०), शीर्षम्, मूर्धा (पुं०), मौलिः, मस्तकः-कम् |

१। शोभया। २। क्लान्तान्।

देह के कुल अङ्ग इत्यादि का वर्णन— देहावयवविशेषाः ।

| हिन्दी । | संस्कृत । | हिन्दी । | संस्कृत । |
|---|---|---|---|
| खोपड़ी | कपालः (लम्), कर्परः, शिरोस्थि (न०). | चूतड़ | नितम्बः |
| | | बाँह | दोः, [पु०] बाहुः, भुजः |
| माथा | ललाटम्, मस्तिष्कम्, भालपट्टम्, पटलम् | नाड़ी | स्नायुः (स्त्री०) शिरा, धमनिः मांसपेशी. |
| भौं | भ्रूः, भ्रूलता. | हाथ | हस्तः, पाणिः, करः, पञ्चशाखः |
| आँख | चक्षुः, (न०) नेत्रम्, नयनम्, अक्षि (न०). | कोहनी | कूर्परः, कफ [फो] णिः |
| | | उँगली | अङ्गुलिः-ली । |
| नाक | नासिका, घोणा, गन्धज्ञा नासा | अंगूठा | अङ्गुष्ठः । |
| मुँह | वक्त्रम्, आननम्, मुखम्, तुण्डम्. | चारउँगलियों के नाम | तर्जनी, मध्यमा, अनामिका, कनिष्ठिका, |
| दाँत | दन्तः, रदः, दशनः दंष्ट्राजम्भः. | हथेली | करतलः लम्. |
| मसूड़े | दन्तमांसम्. | नोंह | नखः-खम्, कररुहः, नखरः-रम् |
| जीभ | जिह्वा, रसना, रसज्ञा. | शरीर | कायः, देहः, शरीरम्, वपुः (न०) गात्रम्. |
| तालुआ | तालु, (न०) काकुदम्. | | |
| फेफड़ा | फुप्फुसम्. | खाल | चर्म (न०) त्वक् (स्त्री०) |
| डाढ़ | दंष्ट्रा. | हड्डी | कीकसम्, कुल्यम्, अस्थि (न०) |
| हलक | कण्ठः, गलः, ककः, निगरणः. | मांस | पिशितम्, मांसम्, पललम्, क्रव्यम्. |
| जवान | युवा (पु०) तरुणः. | | |
| बूढ़ा | वृद्धः, स्थविरः. | चरबी | मेदः (न०) वसा, वपा. |
| कान | कर्णः, श्रोत्रम्. | हड्डीके भीतरकी चरबी | मज्जा, सारः |
| कानका मैल | कर्णकिट्टम्, कर्णमलम्. | | |
| ठोड़ी | चिबुकम्, हनुः (पु० स्त्री०) | खून | रुधिरम्, असृक् (न०) अस्रम्, रक्तम्. |
| गर्दन | ग्रीवा, गलः, कन्धरः, शिरोधिः. | | |
| कन्धा | स्कन्धः, अंसः । | कलेजा | युकृम् (क्रा), अग्रमांसम्. |
| पीठ | पृष्ठम, पृष्ठदेशः | लार | घणिका, स्यन्दिनी, लाला. |
| कमर | कटिः, श्रोणिः (णी), (स्त्री) | पैर की घुट्ठी. | घुटिके, गुल्फौ. |

देह के कुल अङ्ग इत्यादि का वर्णन — देहावयवविशेषाः।

| हिन्दी। | संस्कृत। | हिन्दी। | संस्कृत। |
|---|---|---|---|
| जङ्घाका ऊपरीहिस्सा | ऊरुः, सक्थि (न०) | छिनार | कुलटा, पुँश्चली, बन्धकी. |
| | | विधवा | विश्वस्ता, विधवा, रण्डा. |
| मूत. | मूत्रम्, प्रस्रावः. | सखी | आलिः, वयस्या. |
| मल. | पुरीषम्, गूथम्, विष्ठा, शकृत्, (स्त्री). | सुहागिन | पतिवत्नी, सभर्तृका. |
| | | दूती | दूतिः, सञ्चारिका. |
| पुरुष का वीर्य्य | शुक्रः, [पुं.] वीर्यम्, रेतः, बीजम्. | वेश्या | वारस्त्री, वारांगना, गणिका. |
| | | खाविन्द | धवः, पतिः, भर्ता. |
| स्त्री का ,, | रजः, पुष्पम्, आर्तवम्. | जार लवार | जारः, उपपतिः. |
| अंडकोश | मुष्कः, वृषणः. | जेर | उल्वम्, जरायुः, गर्भाशयः. |
| कुचा | कुचः, स्तनः | सोबर | सूतिगृहम्. |
| दिल. | मनः, (न०) मानसम्, चित्तम्, हृदयम्, हृत्, चेतः (न०) | गर्भ | गर्भः, भ्रूणः (कुक्षिस्थस्य प्राणिनः नाम). |
| मूत्राशय. | वस्तिः. | मानना | मन्यते. |
| गुदा. | गुदम्, अपानम्, पायुः, (पुं०) मलद्वारम्. | लाना | आनयति, आहरति, आवहति प्रापयति। |
| बुद्धि. | बुद्धिः, मनीषा, धिषणा, प्रज्ञा, शेमुषी, धीः। | काजल लगाना | कज्जलं निदधाति, नियोजयति, अनक्ति. |
| | | सूँघना | जिघ्रति, |
| पेट. | उदरम्, जठरम्, तुन्दम्, कुक्षि | थूकना | ष्ठीव्यति, नि-ष्ठीवति। |
| ढूँडी. | नाभिः (भी), उदरावर्तः | निगलना | ग्रसते, निगिरति. |
| आँतें. | अन्त्राणि। | डकारना | उद्गिरति। |
| लिंग. | लिंगम्, उपस्थः, शिश्नः, मेढ़ | छींकना | क्षौति, क्षवथुं करोति। |
| योनी. | योनिः, भगः-(गम्). | कै करना | वमति, उद्वमति। |
| पैर | पादः, पदम्, चरणः-णम्, अंघ्रि | नाक साफ करना | नसः मलं त्यजति। |
| पस्लें | प्रसृतिः. | | |
| चुटकी | छोटिका. | खकारना | कासते, क्षौति। |
| मुका, मुट्ठी | मुष्टिका. | खाँसना | |

## देह के कुल अङ्ग इत्यादि का वर्णन— देहावयवविशेषाः ।

| हिन्दी । | संस्कृत । | हिन्दी । | संस्कृत । |
|---|---|---|---|
| छूना | स्पृशति । | सीटी बजाना | शीत्शब्द करोति. |
| हँसना | स्मयते, ईषद्धसति, मन्दस्मितम् करोति । | मारना | हन्ति, प्रहरति, ताडयति, अभिहन्ति. |
| चिपटना | आश्लिष्यति, आलिङ्गनं करोति, सजति । | लातमुक्का मारना | लत्तया-पादेन, मुष्टिना-हन्ति, ताडयति, युध्यते, प्रहरति. |
| पेशाब क० | मेहति, मूत्रयति-ते । | खोदना | खनति, [भूमिं] अवदारयति, भिनत्ति |
| दिशा जाना | पुरीषमुत्सृजति, हदते । | मरना | म्रियते, प्राणांस्त्यजति |
| स्त्री प्रसङ्ग करना | अभिगच्छति, संगच्छते, मैथुनंकरोति, | पहरना | परिधत्ते |
| भोजन करना | अत्ति, भसति, खादति, अश्नाति भक्षयति, भुङ्क्ते, अभ्यवहरति | उतारना | अवतारयति, अपनयति. |
| नहाना | स्नाति, मज्जति, गाहते | करना | करोति, विदधाति |
| कुल्ला क० | गण्डूषं करोति | गालीदेना धुतकारना | शपति-ते, अभिशंसति, शापं ददाति, आक्रोशति, गर्हयति. |
| चखना | आस्वादते, लेढि. | आशीर्वाद देना | आशास्ते, आशिषं ददाति-ते, अभिनन्दति. |
| पकड़ना | गृह्णाति, गृह्णीते, धरति, धारयति, बध्नाति. | डूबना | निमज्जति, मज्जयति [प्रे०] |
| लेना | स्वी-अङ्गी-करोति, गृह्णाति. | अभिमान करना | विकत्थते, दृप्यति. |
| उबटन क० | उद्वर्त्तनम्, उत्सादनम् करोति-ते, अभ्यनक्ति. | तर्पणकरना | तर्पयति. |
| कसरत क० | व्यायच्छति. | हवनकरना | जुहोति. |
| कुश्ती क० | मल्लयुद्धकरोति बाहूबाहवि युध्यति. | रोकना | अवरुणद्धि. |
| चलना | चल-र-ति, व्रजति, प्रक्रमति-ते | जप करना | जपति, |
| आना | आगच्छति, आयाति | कानाफूँसी करना | कर्णे जपति. |
| सोना | स्वपिति, शेते, निद्राति. | शुरू करना | आरभते, उपक्रमते, प्रक्रमते. |
| जागना | जागर्ति, प्र वि-बुध्यते, निद्रां त्यजति. | | |

देह के कुल अङ्ग इत्यादि का वर्णन — देहावयवविशेषाः।

| हिन्दी। | संस्कृत। | हिन्दी। | संस्कृत। |
|---|---|---|---|
| रोना | रोदिति, विलपति, आक्रन्दति, अश्रूणि पातयति. | काँपना | कम्पते, वेपते. |
| | | नाचना | नृत्यति, नटति. |
| हँसी करना | उपहासं करोति, उपहसति. | डरना | बिभेति, सं-वि-त्रस्यति उद्विजते. |
| आज्ञा करना | आज्ञापयति आदिशति. | | |
| आज्ञा देना | अनुमन्यते, अनुजानाति, अनुमोदते, अनुजानीते. | घबड़ाना | मुह्यति. |
| | | साफ करना | शोधयति, मार्ष्टि, मार्जयति प्रे० |
| घूमना | परिभ्रमति, पर्य्यटति. | तलाक देना | त्यजति, निराकरोति. |
| घुमाना | भ्रामयति. | डाह करना | असूयति, ईर्ष्यति, [चतुर्थ्या-सह] परोत्कर्षं न सहते, सूष्यति. |
| बहस करना | विवदते. | | |
| भागना दौड़ना | पलायते, धावति-ते, अपक्रमति-ते, क्राम्यति, विद्रवति, परैति, अपधावति, सरति. | | |

पहिला पाठ—प्रथमः पाठः।

| हिन्दी। | संस्कृत। |
|---|---|
| पुरुष अपनी बुद्धि से अत्यन्त बलवान् सिंहादि जीवों को भी वश कर लेता है. | पुरुषः स्वबुद्ध्याऽतीव बलवतोऽपि सिंहादीन् जीवान् वशमानयति. |
| स्त्री को चाहिये कि पति की सेवा करनेवाली होवे और उसको ही ईश्वर तुल्य माने. | योषित्पतिभक्ता भवेत् तमेव चेश्वरतुल्यं मन्येत. |
| माधव के बड़ी भारी चोटी है तू भी ऐसी ही रख. | अस्त्यतीव दीर्घो धम्मिल्लो माधवस्य त्वमप्येतादृशं स्थापय. |
| कृष्णदत्त के बाल मुलायम हैं. | कृष्णदत्तस्य केशाः सुकोमलास्सन्ति. |
| भोजदेव के बाल बड़े कड़े हैं. | भोजदेवस्य चिकुरास्त्वतीव प्रखराः. |

## देह के कुल अङ्ग इत्यादि का वर्णन — देहावयवविशेषाः ।

| हिन्दी । | संस्कृत । |
|---|---|
| तुम्हारे देह के बाल और डाढी लोहरी हैं. | सन्ति लोहितवर्णानि तव देहलोमानि श्मश्रूणि च. |
| स्त्रियों के मुह पर मुछें नहीं होतीं. | स्त्रीणां गण्डस्थले गण्डलोमानि न भवन्ति. |
| बहुत से गोरे डाढी मूँछ नहीं रखते. | बहवो गुरण्डाः श्मश्रुगुम्फौ न दधते. |
| गोविन्ददेव का शिर बुढापे से कांपता है. | गोविन्ददेवस्य शिरः वार्धक्यात्कम्पते. |
| कृष्णदत्त ने रामदास के सिर में ऐसी लाठी मारी जिससे उसकी खोपड़ी फूट गई. | कृष्णदत्तेन रामदासमूर्ध्नि ईदृग्यष्टिप्रहारः कृतः येन तत्कपालो भग्नः। |
| नारायण का माथा बड़ा चौड़ा है इस लिये वह धनवान है. | नारायणस्य मस्तिष्कमतीव विपुलमत एव स धनाढ्यः. |
| केशवदत्त का भौं चलाना तो देखो. | केशवदत्तस्य भ्रूचालनन्तु पश्य । |
| आँखों के बिना जीने से क्या ? | विनाक्षिभ्यां (णी)किं जीवितेन ? |
| माधव की नाक तोते की सी दिखाई देती है. | माधवस्य नासिका(घोणा) शुकनासावद्दृश्यते । |
| उसके मुँह में बहुत से छाले हैं. | तस्य मुखे बहवो विस्फोटका विद्यन्ते. |
| गोविन्द रोज़मर्रा दाँतन करता है इसी लिये उसकी दांतों की क़तार बड़ी उजली है. | गोविन्दः प्रत्यहं दन्तधावनं करोति अत एव तस्य दन्तपंक्तिरतीव शुभ्रा. |
| जीवों को जीभ से ही रस का ज्ञान होता है. | जिह्वयैव रसज्ञानं भवति जीवानाम् । |
| देवदत्त ! आँखों में कज्जल लगालो. | देवदत्त ! अक्ष्णोः कज्जलं निधेहि । |
| कृष्ण अपनी नाक से फूल सूँघता है. | कृष्णः स्वनसा पुष्पाणि जिघ्रति. |
| देखो सांप आपके सामने मूसे को निगलता है. | सर्पो भवताम् समक्षे मूषकं ग्रसत इति पश्यत |
| दुष्ट ! नाक क्यों नहीं साफ़ करता. | दुष्ट ! नसः मलं कथं न त्यजसि क्षालयसि |

## देह के कुल अङ्ग इत्यादि का वर्णन — देहावयवविशेषाः।

| हिन्दी। | संस्कृत। |
|---|---|
| तालुए से बोले जानेवाले अक्षर तालव्य होते हैं. | तालुना प्रोच्यमाना वर्णास्तालव्या भवन्ति. |
| हिंसक जीवों की डाढ़ बड़ी मजबूत और पैनी होती हैं. | श्वापदानां दंष्ट्रा अतीव दृढा निशिताश्च भवन्ति. |
| नाका बेहलक होता है यह सुना जाता है क्योंकि वह जीवों को पकड़ के एक साथ निगल जाता है. | नक्रः निर्गलो भवतीति श्रूयते यतः स जीवानाक्रम्य (धृत्वा) युगपदेव निगिलति. |
| आज तू बहुतही खांसता है इसमें क्या सबब है. | अद्य त्वमतीव काससे (क्षौसि) इत्यत्र किंकारणम् ? |
| कल मैंने दही खाया था वही सबब होगा. | ह्यो मया दधि भक्षितमेतद्धि कारणं भवेत्. |
| देवदत्त कानों से ठीकर नहीं सुनता, तो क्या वह बहिरा है? और क्या. | देवदत्तः कर्णाभ्यां यथावन्न शृणोति, तर्हि स किं बधिरः? आम्,(अथ किं) [बाढम्]. |
| हनुमान की ठोढी बड़ी लम्बी चौड़ी थी. | हनुमतश्चिबुकमत्यायतमासीत्. |
| गोवर्धन की गर्दन बहुत बड़ी और शङ्ख कीसी है. | गोवर्धनस्य कन्धरातीव दीर्घा शङ्खाकृतिश्च विद्यते. |
| शूर वीरों के कन्धे बड़े ऊंचे होते हैं. | शूराणां स्कन्धावत्युन्नतौ भवतः. |
| भीमसेन कुन्ती सहित चारों भाइयों को अपनी पीठ पर चढ़ा कर सुरङ्ग द्वारा लाखा भवन से बाहर निकल गया. | भीमसेनः कुन्त्या सह चतुरोऽपि भ्रातृन् स्वपृष्ठमारोप्य सुरङ्गया लाक्षाभवनाद्बहिर्निस्सृतः. |
| नचकैया अपनी कमर में (चूतरों के ऊपर) कौंधनी बांध कर नाचता है. | नर्तकः स्वकट्यां ( नितम्बस्योपरि ) क्षुद्रघण्टिकां बद्ध्वा नृत्यति. |
| स्त्री का रज और पुरुष का वीर्य मिल कर सन्तति उत्पन्न होती है. | स्त्रिया रजः पुरुषस्य शुक्रो मिलित्वा सन्ततिरुद्भवति. |

## देह के कुल अङ्ग इत्यादि का वर्णन — देहावयवविशेषाः ।

| हिन्दी । | संस्कृत । |
|---|---|
| श्रीराम के भुज दण्ड के प्रताप से दुष्ट डरते हैं. | श्रीरामस्य दोर्दण्डप्रतापेन दुष्टास्त्रस्यन्ति. |
| वह हाथ से मुझे छूता है । | स हस्तेन मां स्पृशति |
| हकीमजी मेरे देह में कुछ हड़चल है कृपा कर नाड़ी तो देखिये. | भिषग्वर! मम देहस्यास्वास्थ्यं वर्तते कृपया नाडिन्तु परीक्षस्व. |
| जब उसने मुझ बेकसूर को भी कोहनी से मारा तब मैंने उसके लात मारी. | यदा स मां निर्दोषमपि कूर्परेणाताडयत् तदाहं त लत्तया प्राहरम्. |
| क्या तुम अंगुलियों के नाम भी जानते हो. | किं त्वमङ्गुलीनां नामान्यपि वेत्सि ? |
| जानता हूं तुम भी सुनो । पहिला तो अंगूठा, दूसरी तर्जनी, तीसरी मध्यमा (बीच की) चौथी अनामिका और पांचवी कनिष्ठिका (कनी). | वेद्म्यहं त्वमपि शृणु। प्रथमस्त्वङ्गुष्ठः द्वितीया तर्जनी तृतीया मध्यमा चतुर्थीअनामिका पञ्चमी कनिष्ठिकेति. |
| भाग्य उलटा होने पर हाथ में आई हुई चीज़ भी नष्ट हो जाती है. | दैवप्रातिकूल्ये करतलगतमपि वस्तु नश्यति. |
| मनुष्य अपने देहों की रक्षा करे क्यों कि यही धर्म कर्म के हेतु हैं. | मनुष्याः स्ववपूंषि रक्षेयुः यत एतान्येव धर्मकर्महेतूनि सन्ति. |
| उसकी खाल बड़ी कड़ी है हिंसक जीवों से भी फाटी नहीं जा सकी. | तस्य त्वगतीव कठिना श्वापदैरपि भेत्तुं न शक्यते. |
| रस, लोहू, माँस, चरबी, हाड़, मज्जा और वीर्य ये सात देह की धातु हैं. | रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि, इति सप्त देहस्था धातवः. |
| नाई को बुला कर इस बालक के नोह कतरवाओ. | नापितमाहूयास्य बालस्य कररुहान्कर्तय |
| इसका हिम्मत बहादुर दिल दुःख की दशा में भी नहीं घबराता है. | अस्य साहसिकं मनः विषमावस्थायामपि न मुह्यति. |

## देह के कुल अङ्ग इत्यादि का वर्णन — देहावयवविशेषाः।

| हिन्दी। | संस्कृत। |
|---|---|
| दामोदरदास की बुद्धि सराहनीय है जो सोलहवें वर्ष में एम. ए. परीक्षा में पास हुए. | सुश्लाघ्या प्रज्ञा दामोदरदासस्य यः षोडशतमेऽब्दे मास्टर आफ आर्ट्सेति परीक्षायामुत्तीर्णोऽभवत्. |
| शङ्करदत्त का पेट तो बड़ा है परन्तु ज्यादह नहीं खाता. | शङ्करदत्तस्योदरन्तु पृथु परन्त्वाधिकं न भुङ्क्ते. |
| गोपीवल्लभ की ढूंडी बड़ी गहरी है यह हर रोज प्रातःकाल ही न्हाता है. | गोपीवल्लभस्य नाभिरतीव गम्भीरा वर्त्तते, स प्रत्यहं प्रत्यूष एव स्नाति. |
| मनुष्य भोजन के पीछे १६ कुल्ले करे. | जनः भोजनान्ते षोडशगंडूषान्कुर्यात्. |
| कृपा करो और यहां से जल्दी जाओ. | कृपां कुरु अतःशीघ्रं गच्छ च. |
| यह शहद हथेली पर रख कर उंगली से चाटता है. | स सारघं करतले धृत्वाऽङ्गुल्या लेढि. |
| मनुष्य पाखाना फिरने के बाद ढेले वगैरः से गुदा साफ करे और फिर जल से. | जनो मलत्यागानन्तरं लोष्टादिना गुदं परिमार्जयेत् ततो जलेन च. |
| बड़े जोर से न पादे और न रोके. | नोच्चैरपानवायुं मुञ्चेत् नचावरुन्ध्यात्. |
| उसके मुंह पर बहुत सी फुन्सी हैं. | तस्य मुखे बहव्यः पिटिका विद्यन्ते. |
| श्रीराम का शरीर सर्व लक्षण सम्पन्न है. | श्रीरामस्य शरीरं सर्वलक्षणसम्पन्नमास्ति. |
| उसकी जांघें केले के खंभों की नाई हैं. | तस्याः ऊरू कदलीस्तम्भवत्स्तः. |
| मेरी परिया में बैल ने लात मारी. | मम गुल्फे वृषभेणपादप्रहारः कृतः. |
| श्रीमान् गुरुजी के चरण कमलों को नमस्कार हो. | नमोनमः श्रीमद्गुरुचरणकमलेभ्यः. |
| मित्र! बहुत दिनों में देखा है आओ मुझसे मिलो. | मित्र! चिराद्दृष्टोऽसि एहि मामाश्लिष्य. |
| इस घड़े को पकड़ो नहीं तो ज़मीन में गिर पड़ेगा. | इमं घटं गृहाण नोचेदयं पृथिव्यां पतिष्यति. |
| इस बालक के मुख से बड़ी लार बहती है. | अस्य बालस्य मुखाद् महती लाला वहति. |

## देह के कुल अङ्ग इत्यादि का वर्णन — देहावयवविशेषाः।

| हिन्दी। | संस्कृत। |
|---|---|
| इस सींक को लाकर मेरे कान का मैल निकालो. | इमां शलाकामादाय मम कर्णकिट्टं निष्काशय. |
| हकीम रोग की जांच के लिये नाड़ी मल और मूत्र की जांच करते हैं. | वैद्याः रुक्परिक्षार्थं नाड़ीं मलमूत्रञ्च परीक्षन्ते. |
| मनुष्य को चाहिये कि वीर्य की बड़े जतन से रक्षा करे. | जनः शुक्रं यत्नेन परिरक्षेत. |
| विना अण्डकोशों के घोड़े अरता कहलाते हैं. | अवृषणा अश्वा अरत्तेति कथ्यन्ते. |
| मोहनी नाम की स्त्री अपने जोड़ों को छातियों से दूध पिलाती है. | मोहिनी नाम्नी स्त्री स्वयमजौ कुचाभ्यां स्तन्यं पाययति. |
| उसके वस्ति (टूंडी से नीचे का हिंस्सा) प्रदेश में बड़ी तकलीफ है। डाक्टर को दिखाओ. | तस्य वस्तिप्रदेशे महती वेदना वर्तते। वैद्य प्रदर्शय. |
| माता व्याह के वक्त बेटेका उबटन करती है. | माता विवाहसमये पुत्रस्योद्वर्तनं करोति. |
| गोविन्द व्याकरण पढ़कर अब काव्यादि पढ़ता है. | गोविन्दो व्याकरणमधीत्याधुना काव्यादीन्पठति. |
| उसने अजीर्ण में खा लिया इसीलिये कै कर दी. | सोऽजीर्णेऽभुङ्क्त अत एवोदवमत्. |
| जो रोज़ मर्रह कसरत करता है वह हमेशा चंगा रहता है. | यो नित्यं व्यायच्छति (व्यायामं करोति) स सदैव स्वस्थो वर्तते (आस्ते) (भवति). |
| आज मेले में बहुत से मल्ल कुश्ती लड़ेंगे सो ज़रूर ही देखना चाहिये. | अद्य महोत्सवे बहवो मल्लाः मल्लयुद्धं करिष्यन्ति तदवश्यमेव द्रष्टव्यम्. |
| घोड़ा अच्छा चलता है. | साधु विक्रमते वाजी. |
| जो मेरेसाथ चले वह आओ. | यो मया सह चलतु स आगच्छतु. |

## देह के कुल अङ्ग इत्यादि का वर्णन—देहावयवविशेषाः।

| हिन्दी। | संस्कृत। |
|---|---|
| आज कलके बहुत से लोग अपनी तुच्छ बुद्धि की युक्तियों से मूर्खों के साथ बहस करते हैं. | आधुनिका बहवो जनाः स्वक्षुद्रबुद्धि-युक्तीः पुरस्कृत्यापण्डितः सह विवदन्ते. |
| जहां इनकी असलियत को जानने वाले पण्डित हैं तहां से तो भाग जाते हैं. | यत्र तन्मर्मज्ञाः पण्डिता विद्यन्ते ततस्तु परिद्रवन्ति. |
| क्या यह मदन मोहन सोता है ? | किमयं मदनमोहनः स्वपिति (शेते) ? |
| नहीं अभीतो जागता है. | न, अद्यापितु जागर्ति. |
| वहां सीटी कौन बजाता है. उसे यहां लाओ मैं मारूंगा. | कस्तत्र शीद् शब्दकरोति। तमत्रानय ताडयिष्याम्यहम्. |
| भाई! देवदत्त ने मुझको मुक्केसे मारा और मैंने उसको लातसे मारा. | भ्रातः! देवदत्तो मां मुष्टिनाताडयत्, अहञ्च तं लत्तया प्राहरम्. |
| रास्ते में गढ्ढा कभी न खोदो। जो खोदता है वही गिरता है यह मशहूर है. | मार्गे कदापि गर्तं न खन। यः खनति स एव पततीति प्रसिद्धम्. |
| अक्सर जीवों के कलेजे और हृदय में ज्यादह चरबी होती है. | प्रायो जीवानां वुक्कायां हृदये चाधिका वसा भवति. |
| प्यारे! आज नये कपड़े पहिनो. | प्रिय! अद्य नूतनानि वस्त्राणि परिधत्स्व. |
| आपके गाँव में कल कौन मरा? | भवतां ग्रामे ह्यः कोऽम्रियत? |
| एक बूढ़ा कुम्हार मरगया यह सुना है. | एको वृद्धकुलालः प्राणानत्यजदितिश्रुतं. |
| सोवर में मत आओ. | सूतिगृहे मागच्छ. |
| यह कौन छींकता है? यह नारायण है और कोई दूसरा नहीं है. | कोऽयं क्षौति? नारायणोऽयं न कोऽप्य-परः. |
| यह घोड़ा बहुत से बोझमे लदाहुआ दिखाई देता है इसका बोझ उतारो. | बहुभाराक्रान्तोयमश्वो दृश्यते, अस्य भारमवतारय. |
| खोटी स्त्रियां अपने पुरुषों को छोड़कर जारों से स्नेह रखतीं हैं. | पुंश्चल्यः स्वपतीन् हित्वा जारान् भजन्ते. |

## देह के कुल अङ्ग इत्यादि का वर्णन—देहावयवविशेषाः ।

| हिन्दी । | संस्कृत । |
|---|---|
| देखो बन्दर तालाब में कैसे तैरते है. | वानरास्तडागे कथं प्लवन्त इति पश्य. |
| जो मनुष्य जल में तैरना नहीं जानता यह गहरे पानी में जरूर ही डूब जाता है. | योजनो जलप्लवनं न जानाति स गम्भीरजलेऽवश्यमेव निमज्जति. |
| जेर में लिपटा हुआ गर्भ पेट में ही माता के खाये हुए अन्न के रस से पुष्ट होता है. | उल्बेनावृतो गर्भः जठर एव मातृखादितेनान्नरसेन पुष्यति. |
| देवदत्त देवताओं के लिये रोज़ हवन करता है. | देवदत्तो देवानुद्दिश्य नित्यं जुहोति. |
| आज कल के महाशय इस हवन को पवन शोधन के लियेही कहते हैं परन्तु पहिले लोग नहीं उनका आपस का भेद तो देखो. | आधुनिका महाशया एतद्धवनं पवनशोधनार्थमेव वदन्ति नतु पूर्वे पश्यत तेषां परस्परभेदम्. |
| जो हवा शुद्ध करनेही के लिये हवन होय तो अपने कपोल कल्पित ग्रन्थों में हवन मन्त्रों से क्या ? | यदि पवनशुद्ध्यर्थमेव हवनं स्यात् तर्हि स्वकपोलकल्पितग्रंथेषु हवन मन्त्रैः किम् ? |
| यह ख्याल करने की बात है. | एतच्चिन्त्यम् । |
| यह कौन है ? यह मेरी बँहदोली है। क्या यह सुहागिन है या विधवा. | केयं ? इयं ममालिः। किमियं पतिवन्ती विधवा वा. |
| आस्तिक लोग देवता और पितृ लोगों को तर्पण करते है. | आस्तिका देवान् पितॄंश्च तर्पयन्ति. |
| गणेशदत्त को बुलाओ. | गणेशदत्तमाकारय. |
| वहतो सन्ध्या करता है. | स तु सन्ध्यामुपास्ते. |
| सिर्फ अपने शास्त्रों के न जाननेवाले अंग्रेजी फारसी ज़बान के जाननेवाले फिज़ूल बकवाद करते हैं. | केवलमविदितस्वशास्त्रा इङ्गलिशपारसिकभाषावेत्तार एव वृथा विकत्थन्ते. |

## देह के कुल अङ्ग इत्यादि का वर्णन—देहावयवविशेषाः।

| हिन्दी। | संस्कृत। |
|---|---|
| इसकी आदत बहुत खराब है यह हमेशा दूसरों की बुराइयों को दूसरों के कानों में कहा करता है. | अस्य प्रकृतिस्त्वतीव दुष्टाऽयं सर्वदा परदोषान् परेषां कर्णे जपति. |
| क्या वेश्या भी गर्भधारण करती है? | किं वारस्त्रियोऽपि गर्भन्धारयन्ति. |
| वह मृत्युञ्जय का जाप अरिष्ट निवारण करने के लिये शुरू करता है। | स मृत्युञ्जयस्य जापमरिष्टनिवृत्तय आरभते. |
| दूतियों का क्या लक्षण है? न मालूम. | दूतीनां किं लक्षणं? न जाने. |
| यह आपका सेवक मौजूद है मुझे हुकम दीजिये मैं क्या करूं. | एषोऽहं तव सेवकः आज्ञापय मां किमहं करोमीति. |
| यह कौन रोती है? कोई भूखी भिकारिन है. | केयं रोदिति? अस्ति काचित्क्षुधार्ता भिक्षुकी. |
| बालक उसकी हँसी करते हैं. | बालकास्तामुपहसन्ति. |
| बहुत से भिखारी एकही दिन में बहुत से गावों में भीख के लिये घूमते हैं. | बहवो भिक्षुका एकस्मिन्नेव दिने बहुषु ग्रामेषु भिक्षार्थम्पर्य्यटन्ति. |
| मैलनिकाला कानका मैल निकालता है. | कर्णमलनिस्सारयिता कर्णकिट्टं निष्काशयति. |
| अब्दुल्लाखां मुसलमान ने कल अपनी स्त्री को तलाक देदी. | अब्दुल्लाखाँभिधो यवनः ह्यः स्वस्त्रियं निराकरोत्. |
| पाँच महायज्ञ नीचे के श्लोक में दिखाये हैं. | पञ्च महायज्ञा निम्नश्लोके प्रदर्शिताः. |
| अध्यापन (पढ़ाना) ब्रह्मयज्ञ, तर्पण पितृयज्ञ, होम दैवयज्ञ, बलि भौतयज्ञ, अभ्यागत पूजन नृयज्ञ. | अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् होमो दैवो बलिर्भौतो नृयज्ञो ऽतिथि पूजनं. |
| है तो परन्तु यह साफ नहीं है महरबानी कर इसको आप खुलासा करो यह किसी शिष्य की किन्हीं गुरुओं | अस्ति तु परञ्चैतन्न स्पष्टं कृपया स्पष्टीकुर्वन्तु भवन्त इति कस्यचिच्छिष्यस्य कौञ्चिद्गुरून्प्रत्युक्तिरियम्। |

देह के कुल अङ्ग इत्यादि का वर्णन—देहावयवविशेषाः।

| हिन्दी। | संस्कृत। |
|---|---|
| के लिये कहत हैं। गुरु—सुनो, चेला—सुनता हूं. | गुरुः—श्रुयतां, शिष्यः—शृणोमि. |
| अध्यापन अर्थात् वेदादि का पढ़ाना पहिला यज्ञ है; अन्नजल इत्यादि से पितृतर्पण करना दूसरा यज्ञ है; हवन और बलिवैश्वदेव यह तीसरा यज्ञ है; बलि (भेंट) देना यह चौथा यज्ञ है; घर आये हुए अतिथियों की अन्नजल से पूजा करना पाँचवाँ यज्ञ है. | अध्यापनं कोऽर्थः वेदादेः पाठनम् प्रथमोयज्ञः; अन्नोदकादिनापितृणांतर्पणाद्वितीयः; होमः वैश्वदेवहोमश्चतृतीयः; बलिहरणं चतुर्थः; अतिथीनां गृहागतानामन्नादिना सपर्या पञ्चमइति. |

दूसरा अध्याय—द्वितीयोऽध्यायः।

वस्त्र इत्यादि का वर्णन—वस्त्रविशेषाः।

| हिन्दी। | संस्कृत। | हिन्दी। | संस्कृत। |
|---|---|---|---|
| कपास | पिचुः, (पुं) तूलः, कार्पासः | अंगरखा | अङ्गरक्षणी. |
| कपड़ा | वसनम्, अंशुकम्, वासः (न०) चैलम्. | धोती | अधोवस्त्रम्. |
| पगड़ी | उष्णीषम्. | पाजामा पतलून | जङ्घात्राणम्, जङ्घावस्त्रम्. |
| टोपी | शिरस्त्राणम्, शिरस्कम्, शिरोवेष्टनम्. | कमरबन्द | कटिसूत्रम्—रशना. |
| | | मोजे | पादत्राणम्. |
| दुपट्टा चादरा | उत्तरीयं. | रजाई वा दुलाई | नीशारः. |
| गलबन्द | गलबन्धनांशुकम्. | चादरजान | उत्तरच्छदः, शय्याच्छादनम्, प्रच्छदः. |
| मिर्जई कुर्ता,कोट | कञ्चुकः, निचोलः. | पोश दड़ी | |
| | | फेंटा | परिकरः. |

## वस्त्र इत्यादि का वर्णन—वस्त्रविशेषाः।

| हिन्दी। | संस्कृत। | हिन्दी। | संस्कृत। |
|---|---|---|---|
| तकिया | उपबर्हणम्, उपबर्हः, उपधानम्. | नारंगी | पिच्छिलः, कौसुम्भी-भः. |
| | | प्याज़ू | पलाण्डुवर्णः. |
| रूमाल | करवस्त्रम्. | हरा | हरित्, हरिद्वर्णः. |
| जाँघिया | जङ्घावस्त्रम्. | केशरिया | केशरवर्णः, कुंकुमवर्णः. |
| लोई, कंबल | रल्लकः, कम्बलः. | कपूरिया | कर्पूरवर्णः. |
| लँहगा | चण्डातकम्—कः | घुसना | प्रविशति. |
| अँगी | चोलः | सीना | वि नि सीव्यति (सिव्). |
| ओढ़ना साड़ी | शाटिका. | उठना, खड़ा होना | उत्तिष्ठति, अवतिष्ठति. |
| रेशमीवस्त्र | कौशिकम्, क्षौमम्, दुकूलम्, कौशाम्बरम्. | बिछाना | सं+आ+परिस्तृणाति. |
| | | ख़रीदना | क्रीणाति, क्रीणीते. |
| पड़दा | जवनिका, तिरस्करिणी. | बेचना | विक्रीणाति, विक्रीणीते. |
| रंग | वर्णः, रागः, रङ्गः. | कातना | कर्तति, कर्तयति, (प्र०) वयति, तन्तून् करोति सृजति. |
| नीला | नीलः, श्यामः. | | |
| काला | कृष्णः, कालः, असितः. | | |
| पीला | पीतः, पीतलः, हरिद्राभः. | बुनना | वयतिते, वयतिने, गुम्फति, विरचयति. |
| लाल | रक्तः, लोहितः, शोणः. | | |
| भूरा सपेद | श्वेतः, शुक्लः, धवलः, सितः. | बैठना | तिष्ठति, आस्ते, निषीदति, उपविशति. |
| बैंजनी | धूम्रः, धूमलः, नीललोहितः. | | |
| गुलाबी | पाटलः, जपासवर्णः. | रंगना | रञ्जयति. |

| हिन्दी। | संस्कृत। |
|---|---|
| जैसे मनुष्य पुराने वस्त्रों को छोड़कर नये वस्त्रों को पहनता है वैसेही यह प्राणी पुराने देह को छोड़ कर नये को लेता है। | यथा नरो जीर्णानि वासांसि विहाय नवान्यं शुक्लानि परिधत्ते, तथैवायं देही पुराणं देहं परित्यज्य नूतनं गृह्णाति. |

## वस्त्र इत्यादि का वर्णन—वस्त्रविशेषाः ।

| हिन्दी । | संस्कृत । |
|---|---|
| कचहरी में विना पगड़ी का कोई भी आदमी नहीं घुसता है. | अधिकरणे ऽनुष्णीषः कश्चिदपि जनो न प्रविशति. |
| मेरी टोपी कहां गई उसे ढूंढ कर यहां लाओ. | मम शिरस्त्राणं कुत्र गतं तदन्विष्यानय. |
| मेरा दुपट्टा तो खूंटी से उतार दो. | ममोत्तरीयन्तु नागदन्तादवतारय. |
| जाड़े के मौसम में गुलूबन्द बहुत सुखदायक होता है. | शीतर्तौ शिरोधरांशुकमतीव सुखप्रदं भवति. |
| कल मैं दो कुर्ते सिलवाऊंगा. | श्वोऽहं द्वौकञ्चुकौ सेवयितास्मि. |
| क्या आपके पास मेरी धोती है? नहीं तो कैसे न्हाऊं. | किं तव सन्निधौ ममाधोवस्त्रमस्ति? न तर्हि कथं स्नायाम्. |
| तुम्हारे पाजामे में तो कमरबन्द भी नहीं है. | तव जङ्घात्राणे तु कटिसूत्रमपि नास्ति. |
| यह लो, मैं देता हूं। मोज़े भी पहन लो. | अहं ददामीदं गृहाण। पादत्राणेऽपि परिधत्स्व. |
| शूर वीर लोग फेंटा बांधकर लड़ाई के लिये खड़े होते हैं. | शूराः परिकरं बध्वा युद्धार्थमुत्तिष्ठन्ति. |
| रात में ओढ़ने के लिये चादरा लाओ. | रात्रौ परिधानार्थमुत्तरीयमानय. |
| खाट पर बिछौना बिछाओ. | शय्योपरि शय्याच्छादनं प्रस्तारय. |
| अब रज़ाई की जरूरत नहीं है. | नास्त्यावश्यकताधुना नीशारस्य. |
| जो कोई तकिया हो तो देओ. | यद्यस्ति किञ्चिदुपबर्हणं तर्हि देहि. |
| कल मैंने पांच रूमाल खरीदे. | ह्योऽहं पञ्चकरवस्त्राण्यक्रीणाम्. |
| कम्बल सब मौसमों में सुखदायक है. | सर्वर्तुषु कम्बलः सुखप्रदः. |
| बीकानेर की लोई बहुत अच्छी होती है. | बीकानेरस्य राङ्कवम् प्रशस्यतरं भवति. |
| वह स्त्री साड़ी उतार लहँगा पहनती है. | सा स्त्री शाटिकामवतार्य चण्डातकं परिधत्ते. |
| अक्सर स्त्रियां जाड़े के मौसम में दुलाइयां ओढ़ती हैं. | प्रायः स्त्रियः शीतर्तौ नीशारान्परिदधते. |

## वस्त्र इत्यादि का वर्णन — वस्त्रविशेषाः।

| हिन्दी। | संस्कृत। |
|---|---|
| उसकी अँगिया कहां है? | तस्याश्चोलः कुत्र वर्तते? |
| वह तो धोती ही में लिपट रही है. | स तु शाटिकायामेवालग्नः. |
| रेशमी और ऊनी कपड़ा भजन पूजा में अच्छा होता है. | क्षौमं और्णञ्च वसनं भजनपूजादिषु प्रशस्तं भवति. |
| यह पड़दा यहां क्यों लगाया है? | किमर्थमारोपितैषा जवनिकाऽत्र? |
| कपास से रूई निकलवा कर और उसे कतवा कर बहुत तरह के कपड़े बनाये जाते हैं. | कार्पासात्तूलं शोधयित्वा तत्कर्तयित्वा च बहुविधानि वस्त्राणि विरच्यन्ते, (निर्मीयन्ते). |
| कोई रँगरेज़ बुला कर ग्यारह ओढ़ने अलग २ रंग के रंगने के लिये दो. | कञ्चिद्रञ्जकमाहूयैकादशशाटिकाःपृथक्पृथक् वर्णारञ्जनार्थं प्रयच्छ. |
| आप कौन २ से रंग चाहते हैं सिर्फ उनके नामही ले दीजिये वे उसी रंग के हो जायँगे। बहुत अच्छा. | भवान् काँस्कान्वर्णानभिलषति तेषां नामान्येव केवलं ब्रवीतु तास्तु तद्वर्णा एव भविष्यन्ति। वरम्. |
| एक नीली, दूसरी काली, तीसरी पीली, चौथी लाल, पाँचवीं बैंजनी, छठी गुलाबी, सातवीं नारंगी, आठवीं प्याज़ू, नौवीं हरी, दसवीं केसरिया, ग्यारहवीं कपूरिया वग़ैरह. | एका नीला, द्वितीया कृष्णा, तृतीया पीता, चतुर्थी रक्ता, पञ्चमी नीललोहिता, षष्ठी पाटला, सप्तमी कौसुम्भी, अष्टमी पलाण्डुवर्णा, नवमी हरिद्वर्णा, दशमी केशरवर्णा, एकादशी कर्पूरवर्णा चेति. |
| सेमल की रुई और आक की रुई से भरा हुआ तकिया या बिछौना गरम और मुलायम होता है. | शाल्मलितूलेनार्कतूलेन भृतमुपबर्हणमास्तरणञ्चोष्णं कोमलञ्च भवति. |



## तीसरा अध्याय—तृतीयोऽध्यायः ।

### गहने इत्यादि का वर्णन—आभूषणविशेषाः उपाभरणाश्च ।

| हिन्दी। | संस्कृत। | हिन्दी। | संस्कृत। |
|---|---|---|---|
| गहने | अलङ्कारः, आभरणम्, परिष्कारः. | बिछिया | नूपुरः-रम्, मञ्जीरम्. |
| तोड़ा, कठला, कण्ठा | कण्ठिका, कण्ठाभरणम्. | जञ्जीर | श्रृङ्खला, श्रृङ्खलः. |
| अंगूठी, छल्ले | अङ्गुलीयकम्, ऊर्मिका. | नथ | नासाभरणम्. |
| कौंधनी | मेखला, काञ्चिः-ञ्ची. | अल्मारी | काष्ठफलकम्. |
| दान्तकुरेदनी सुई | दन्तशोधनी सूचिः. | कंघी | प्रसाधनी, कङ्कतः-तिका, केशमार्जनी. |
| बोला | वालपाश्या, पारितथ्या. | बुरुश | आकर्षणी, लोममयी मार्जनी वा शोधनी. |
| बिन्दी, बेना | स्त्रीमस्तकाभरणम्. | दर्पण | मुकुरः, दर्पणः, आदर्शः. |
| चम्पाकली गुलीबन्द | ग्रैवेयकम्, कण्ठभूषा. | सुर्मा, काजल | अञ्जनं, कज्जलं |
| हार, माला | लम्बनम्, ललन्तिका, हारः. | साबुन | फेनिलः, मार्जनलेपः, पल्पूलम्. |
| कनफूल | ताटङ्कः, कर्णिका, कर्णभूषणम्, कुण्डलम्, कर्णवेष्टनम्. | तेल, फुलेल | गन्धतैलम्, पुष्पवासितम्. |
| | | बिन्दी | बिन्दुः (पु) |
| बाजूबन्द, जोशन | केयूरम्, अङ्गदम्. | शोभित होना | शोभते, राजति-ते. |
| मठिया | कङ्कणम्, करभूषणम्. | | |
| पहुंची | आवापकः, कटकः, वलयः. | बनवाना बनाना | निर्मापयति, निर्माति, निर्मिमीते, करोति, विधत्ते, विरचयति. |
| मोती | मुक्ता, मुक्ताफलम्, शुक्तिजम्. | | |
| आरसी | अङ्गुष्ठाभरणम्. | धारणकर्ना | धारयति. |
| चूड़ी | काचवलयम्. | (बाल) काढ़ना | (केशान्) प्रसाधयति. |
| पायजेब लच्छे | पादभूषणम्. | धोना | प्रक्षालयति. |

## गहने इत्यादि का वर्णन—आभूषणविशेषाः उपाभरणाश्च।

| हिन्दी। | संस्कृत। | हिन्दी। | संस्कृत। |
|---|---|---|---|
| लगाना | संयोजयति, निवेशयति. | सौगन्ध खाना | शपति, शपथं करोति. |
| चुराना | चोरयति, मुष्णाति, अपहरति. | | |

| हिन्दी। | संस्कृत। |
|---|---|
| देखो गोविन्द की गर्दन में तोड़ा कैसा सोहता है. | पश्य गोविन्दस्य कण्ठे स्वर्णकण्ठिका कथं शोभते. |
| स्त्रियों का चूड़ी पहननाही अक्सर सुहाग का चिन्ह माना जाता है. | स्त्रीणां काचवलयधारणं हि प्रायः सौभाग्यलक्षणं मन्यते. |
| उस औरत की उंगलियाँ अंगूठी छल्लों से और अंगूठा आरसी से अच्छा लगता है. | तस्याः स्त्रिया अङ्गुलयः अङ्गुलीयकैः राजन्ते, अङ्गुष्ठोऽङ्गुष्ठभूषणेन च. |
| यह आदमी सोने की कौंधनी और सोने की जञ्जीर पहनता है. | अयं जनो हैमीं मेखलां हैमं गलभूषणञ्च परिधत्ते. |
| कल मैं सुनार से चाँदी की दान्तकुरेदनी सुई बनवाऊंगा. | श्वोऽहं स्वर्णकारात् राजतीं दन्तशोधनीं सूचीं निर्मापयिताऽस्मि. |
| स्त्रीलोग सिर में चोला, बन्दी बैना माथे पर, कर्णफूल कानों में, चम्पाकली व हार गर्दन में, बाजू बाहों में, मठिया और पहुँची पहुँचे में, नथ नाक में, पायजेब लच्छे पाओं में, बिछिया पैरों की उँगलियों में, कौंधनी कमर में पहनती हैं. | स्त्रीयो बालपाश्यां शीर्षे, स्त्रीमस्तकाभरणञ्च मस्तके, ताटकौ कर्णयोः, ग्रैवेयकं लम्बनञ्च ग्रीवायां, केयूरे बाह्वोः, कङ्कणे वलयौ च प्रकोष्ठे, नासाभूषणं घोणायां, पादभूषणानि पादयोः, नूपुरान् पादाङ्गुलीषु, मेखलाञ्च कट्यां धारयन्ति. |
| धनवानलोग अक्सर सोने की जञ्जीर गले में पहना करते हैं. | स्वर्णशृङ्खलां प्रायो धनिनः कण्ठे (गले) धारयन्ति. |
| गोपीनाथ आँखों में अञ्जन लगाता है. | गोपीनाथो नेत्रयोरञ्जनमनक्ति. |

## गहने इत्यादि का वर्णन—आभूषणविशेषाः उपाभरणाश्च ।

| हिन्दी । | संस्कृत । |
|---|---|
| यह स्त्री माथे में सिन्दूर का बेंदा और दान्तों में मञ्जन लगाती है. | सा स्त्री मस्तके सिन्दूरस्य विन्दुं दन्तेषु मञ्जनञ्च संयोजयति (निवेशयति). |
| आल्मारी से कंघी लेकर बाल फाड़लो. | काष्ठफलकात् कङ्कतिकामादाय केशान् प्रसाधय. |
| क्या अभी तक मुँह नहीं धोया अपना मुँह तो शीशे में देख. | किमद्यावधि मुखं न प्रक्षालितं स्वयन्त्वन्तु मुकुरे पश्य. |
| आज मैं दुकान से बुश और साबन मोल लूंगा. | अद्याहं विपणितः लोममयीं मार्जनीं फेनिलञ्च क्रेष्यामि. |
| चन्दन और हुसी मेरे लिये भी लाना. | चन्दनं चन्दनघर्षणखण्डञ्च मदर्थमप्यानय. |
| यह गन्धी अतर बेचता है. | गन्धतैलविक्रेताऽयं पुष्पवासितं तैलं विक्रीणीते. |
| यह अमीर मोतियों की माला पहनता है. | धनाढ्योऽयं मुक्ताफलस्रजं धारयति. |
| यह औरत मेरी औरत का गुलीबन्द चुरा लेगई. | सा स्त्री मम स्त्रियाः ग्रैवेयकमपाहरत्. |
| उसको अकेले में बुलाकर पूछो. | तामेकान्ते आहूय पृच्छ. |
| जब उससे पूछा तब सोगन्ध खा गई कि मैंने कुछ नहीं चुराया. | 'यदा सा पृष्टा तदा मया न किमपि चोरितमिति शपथमकरोत्. |
| मोहनी नाम की स्त्री गुलीबन्दही पहनती हुई देखी है नकि कर्नफूल और घण्टी वेना. | मोहनी नाम्नी स्त्री ग्रैवेयकमेव दधाना दृष्टा न कर्णिका ललाटिकाश्च. |



## चौथा अध्याय—चतुर्थोऽध्यायः।

### गृहस्थी के वस्तु इत्यादि का वर्णन—गृहस्थवस्तूनि।

| हिन्दी। | संस्कृत। | हिन्दी। | संस्कृत। |
|---|---|---|---|
| खड़ाऊं | पादुका. | घड़ा | घटः, कलशः. |
| जूता | उपानत्(स्त्री)चरणपादुका. पादुः | ईंढरी | घटाधारयन्त्रम्. |
| चौकी, स्टूल | काष्ठपीठः. | चलनी | चालनी, तितउः (पुं) |
| मेज़ | फलकः-कम्, मञ्चः, आधारः. | रई | मन्थः, मन्थदण्डकः. |
| आराम-चौकी | सुखासनम्. | बुहारी | संमार्जनी, शोधनी. |
| मूढ़ा,कुर्सी | विष्टरः, आसनम्, पीठम्, आसन्दी. | कुदारी | कुदारी, कुठारी, कुठारः. |
| तिपाईबेंच | त्रिपादिका. | फावड़ा | कुद्दालम्, अवदारणम्. |
| छाता | छत्रम्, आतपत्रम्, घर्म-वारणम्. | दीया-सलाई | दीपशलाका. |
| लठिया | लष्टिका,यष्टिका,यष्टिः(स्त्री) | चकमक पत्थर | वन्हिसञ्जननग्रावा (पुं) |
| चक्की-चकला | पेषणी,पेषणयन्त्रम्,अरघट्टः | फूकनी | नलिका. |
| पनचक्की | जलचाल्यचक्रम्,जलयन्त्रम् | चक्कूछुरी | छुरिका. |
| चूल्हा | चुल्लिः, चुल्ली, अधिश्रयणी. | छींका | शिक्यम्. |
| अंगीठी | अङ्गाराधानिका, अङ्गारश-कटी, हसन्तिका. | जूना | यूनम्. |
| मूसल | मुशलः-लम्. | रस्सी | रज्जुः, (स्त्री) |
| खाट | खट्वा. | फ़र्श | भूतलास्तरणम्, - भूतलसं-स्तरः. |
| पलंग | कशिपुः, पल्यङ्कः, मञ्चः. | सन्दूक-पिटारी | पेटिका, समुद्गकः, सम्पुटः पिटकः, मञ्जूषा. |
| ओखली | उलूखलम्, उदूखलम्. | चर्खा | तान्तवयन्त्रम्. |
| छाज | सूर्पम्. | तकुआ | तर्कुः (स्त्री). |
| | | हल | लाङ्गलम्, हलम्, फालः गोदारणम्, सीरः. |
| | | कूँचा | कूर्चिका. |

## गृहस्थी के वस्तु इत्यादि का वर्णन—गृहस्थवस्तूनि ।

| हिन्दी । | संस्कृत । | हिन्दी । | संस्कृत । |
|---|---|---|---|
| हरीस | ईषा लाङ्गलदण्डः. | पंखा | वीजनम्, व्यजनम्. |
| शिल, लोढ़ी | शिला, शिलापुत्रः | (खस का पंखा) | उशीरवीजनम्. |
| जोते | आयन्धः, योक्त्रम्, योत्रम्, | | |
| टोकरा | मञ्जूषा, पिटकः, करण्डः, कण्डोलः. | पीसना | पिनष्टि, क्षुणत्ति, चूर्णयति. |
| | | दलना | दलयति. |
| ताला, ताली | तालकम्, कुञ्चिका, ताली | बुहारना | मार्ष्टि, संमार्जयति. अपनयति. |

| हिन्दी । | संस्कृत । |
|---|---|
| मेरा छाता और लाठी लेकर यहां आओ. | मदीयं छत्रं लष्टिकाञ्चादायात्रागच्छ. |
| खड़ाऊ पहन हुए एक साधु यहां आया. | काष्ठपादुके धारयन्नेकस्साधुरत्रागच्छत् |
| मैं फ़राकत जाता हू मेरी जूती लाओ. | शौचार्थमहं गच्छामि मदुपानहावानय. |
| इस चौकी ही पर जल का घड़ा रक्खो. | अस्य काष्ठपीठस्योपर्य्येव वारिघटं स्थापय |
| मैं यहीं ही न्हालूंगा. | अहमत्रैव स्नास्यामि. |
| ये आरामचौकी है इस पर बैठिये और मेरी बात सुनिये. | सुखासनमिदं स्थीयतामस्योपरि मद्वार्ता श्रूयताम्. |
| इस मूढ़ं और इस तिपाई को उठाकर उस मेज़ के पास रख दो. | इमं विष्टरमिमां त्रिपादिकाञ्चात उत्थाप्य तत्फलकसमीपे स्थापय. |
| मेरी दफ़्तर में तो एक स्टूल है जो आप हुक्म दें तो लाऊं. | मम कक्षायान्त्वेकः काष्ठपीठो वर्त्तते आनयामि चेदाज्ञापयेयुर्भवन्तः. |
| मेरे घर दो चक्की है. | मम गृहे द्वे पेषणयन्त्रे स्तः. |
| ब्याह के लिये अपने गेंहू तो मैं पनचक्की में पिसवाऊंगा. | विवाहार्थं स्वगोधूमांस्त्वहं जलयन्त्रे पेषयिष्यामि. |
| चकला यहां ले आओ मैं पांच सेर चने दलूँगा. | पेषणयन्त्रमत्रानयाहं पञ्च सेटकान् चणकान्दलयिष्यामि. |
| इस घर में दो चूल्हे हैं. | अस्मिन्गृहे द्वे चुल्ल्यौ स्तः. |

## गृहस्थी के वस्तु इत्यादि का वर्णन—गृहस्थवस्तूनि।

| हिन्दी। | संस्कृत। |
|---|---|
| एक मूशल की बड़ी ज़रूरत है इसलिये अपने गाँव के बढ़ई से बनवा कर भेजो. | अस्त्यतीवावश्यकतैकस्य मुशलस्यातः स्वग्रामतक्षकान्निर्मापयित्वाऽत्र प्रेषय. |
| और भी गृहस्थ की बहुतसी सामग्री हैं उनको भी सुनो. | सन्त्यन्या अपि बह्व्यः सामग्र्यो गृहस्थस्य ता अपि शृणु. |
| खाट, पलङ्ग, मेज़, ओखली, छींका, छाज, चलनी, बुहारी, चर्खा, तकुआ, अंगीठी, कुदारी, टोकरा, कूँचा. | खट्वा, पल्यङ्कः, काष्ठफलकः, उलूखलम्, शिक्यम्, शूर्पम्, चालनी, संमार्जनी, तान्तवयन्त्रं, तर्कुः, अङ्गाराधानिका, कुदारी, करण्डः, कूर्चिका. |
| आँच निकालने का पत्थर, दीयासलाई, सिल, लोढ़ी, फुकनी, चाकू, ताला, कुञ्जी, घड़ा, रस्सी, सन्दूक, खस का पङ्खा, फ़र्श वग़ैरह. | वह्निसंजननग्रावा, दीपशलाका, शिला, शिलासुतः, नलिका, छुरिका, तालकम्, कुञ्चिका, घटी, रज्जुः, पेटिका, (मञ्जूषा) उशीरवीजनम्, भूतलास्तरणमित्यादयः. |
| वह स्त्री अपने घरको बुहारी से बुहारती है. | सा स्त्री स्वगृहं शोधन्या संमार्जयति. |
| यह लकड़हारा जूने में ईंधन बाँध कर बाज़ार में बेचने को लाता है. | स काष्ठक्रेता यूने इन्धनं बद्ध्वाऽऽपणे विक्रेतुमानयति. |
| यह कौन बुढ़िया है जो तकुआ से सूत कातती है. | केयं वृद्धा या तर्कुणा सूत्रं कर्तयति. |

## पांचवां अध्याय — पञ्चमोऽध्यायः ।

### गृहस्थ और वर्तन इत्यादि का वर्णन—गृहस्थानांविशेषाः पात्रविशेषाश्च ।

| हिन्दी । | संस्कृत । | हिन्दी । | संस्कृत । |
|---|---|---|---|
| राजमहल | प्रासाद् | सुरङ्ग | सुरङ्गा, गूढ़मार्ग . |
| धनिकों का घर | हर्म्यम्. | खुण्टी | नागदन्त , भारयष्टि |
| झोंपड़ी, कुटी | उटज -जम्, कुटीर , पर्ण शाला | खूटा | शिवक कीलक |
| रसोईघर | पाकशाला, महानसम् | भींत | कुड्यम्, भित्ति |
| न्हाने की जगह | स्नानागारम्. | अट्टा | अट्ट , अट्टालकम् |
| जीना | सोपानम् आरोहणम्. | छप्पर | तृणपटलम्, तृणच्छदि |
| नसेनी | निश्रेणि , आधरोहिणी | कूआ | कूप , उद पानम्, अन्धु [पु] |
| पाखाना | शौचागारम् | बावड़ी | वापिका, दीर्घिका. |
| बैठक | अधिवेशनस्थानम, सत्का शाला | तालाव | तटाक , सर [न०] ह्रद |
| आँगन | अङ्गणम | ईंट [पक्का कच्चा] | इष्टका, पक्वेष्टका, आमेष्टका |
| चौतरा | चत्वरम् | देहली | गृहावग्रहणी, देहली |
| झरोखे | वातायनम्, गवाक्ष . | कलई | सुधा |
| कमरा या कोठरी | कक्ष क्षा,कोष्ठ ,शालागृहम | छत्त | छदि [स्त्री] पटलम् |
| खोड | तुला, स्थूणा | पतनाला | प्रणाल |
| खम्भे | स्तम्भ | मोरी | जलनिर्गम , जलोच्छ्वास |
| किवाड़ | कपाटम् अररम्. | परैंढी | जलस्थानम्. |
| सकल | श्रृङ्खला लम्, निगड. | छज्जे | मञ्च [पु०प०] मञ्चसनाथ गृह |
| खिड़की | प्रच्छन्नम्, अन्तर्द्वारम् | दर्वाजा | द्वा , [स्त्री] द्वारम् . |
| सोने की जगह | शयनस्थानम् | घर | गृहम्, गेहम्, वेश्मन् [न०] |
| | | | **पात्रविशेषा ।** |
| | | थाली | पात्रम्, भाजनम् |
| | | कलशा घड़ा लोटा | कलश -शम् घट , उदक पात्रम् |

## गृहस्थ और बर्तन इत्यादि का वर्णन–गृहस्थानां विशेषाः पात्रविशेषाश्च।

| हिन्दी। | संस्कृत। | हिन्दी। | संस्कृत। |
|---|---|---|---|
| टोकनी | स्थाली, उखा, [स्त्री] पिठरः पिष्टपचनम्. | लोहा | अश्मसारः, अयः [न०] लोहः-हम्, कालायसम्. |
| चमचा | चमसः-सम्, दर्विः र्वी [स्त्री] | तांबा | ताम्रम्, शुल्वम्, उदुम्बरम्. |
| बर्तन | अमत्रम्, पात्रम्. | सोना | स्वर्णम्, सुवर्णम्, कनकम्, रुक्मम्, जाम्बूनदम्, चामीकरम्, काञ्चनम्, हेमन् [न०] हिरण्यम्. |
| पली | कंबिः-बी, दर्विः, खजाका. | | |
| कुप्पी | कुतूः [स्त्री०] | | |
| चीमटा | कंकमुखम्. | | |
| संडासी | संदंशः-कम्. | सीसा | सीसम्, नागम्, वप्रम्. |
| गिलास | पानपात्रम्, शरावः. | चान्दी | रजतम्, रूप्यम्. |
| कटोरा | चषकः-कम्, काचपात्रम्. | काच | क्षारः, काचः. |
| कुंडी, सोंटा | अश्मपात्रम्, लगुडः, यष्टिः [स्त्री०] | मैलाकरना | कलुषयति, आविली मलिनी करोति. |
| मथानी | मन्थनी, गर्गरी. | छवाना | आच्छादयति. |
| परात | बृहद्भाजनम्. | चाहना | अभिलषति, इच्छति, रोचते |
| घिसौट | कुठरः, विष्कम्भः. | फेंकना | प्रास्यति, आपातयति. |
| कड़ाही | कटाहकः, बृहत्कटाहः. | डालना | प्रक्षिपति. |
| घंटा, हांडी | हण्डी | लिप्पी-कराना | लेपयति. |
| नाद | द्रोणिः-णी [स्त्री०] | | |
| तवा | ऋजीषम्, पिष्टपचनम्. | जलाना | दाहयति, ज्वलयति, तापयति. |
| पीतल | पित्तलम्, आरकूटः-टम्, रीतिः. | जलना | दहति, ज्वलति, तपति, प्लुष्यति. |
| कांसी | कांस्यम्. | | |

## गृहस्थ और बर्तन इत्यादि का वर्णन—गृहस्थानांविशेषाः पात्रविशेषाश्च।

| हिन्दी । | संस्कृत । |
|---|---|
| राजाओं के घर "प्रासाद" धनवानों के घर "हर्म्य" और ऋषियों का "उटज" कहलाता है. | राज्ञां गृहं प्रासादः, धनिनां गृहं हर्म्यः, ऋषीणामुटज इति कथ्यते. |
| आप के घर में कोई अलग रसोई घर भी है. | भवतः वेश्मनि काचित्पृथक् पाकशालाप्यऽस्ति. |
| नहीं, तो धूँआ गृहस्थ की चीज़ों को काला करही देगा. | नहि, तर्हि धूमः गृहस्थानां वस्तूनि मलिनी करिष्यत्येव. |
| शादी वगैरह में भट्टी से काम चलता है मामूली चूल्हे से नहीं. | विवाहादौ बृहदधिश्रयण्या कार्यं भवति नतु सामान्यचुल्लिभिः. |
| मेरे घर में तो बैठक रसोई घर गुसलघर और पाखाना अलग २ हैं. | ममगृहेतु सत्कारालयः पाकशाला स्नानगृहम् शौचागारं च पृथक्पृथगस्ति |
| तुम्हारे घर में आँगन कैसा है. | तव गृहे कीदृगङ्गनमस्ति. |
| न बहुत लम्बा चौड़ा न छोटा ही. | नातिविस्तीर्णं न सङ्कीर्णमेव. |
| इस घर में बहुत से झरोखे, चार कोठे, चौंसठ शीशम की कड़ियां, नीम के किवाड़, कितनीही खिड़कियां मौजूद हैं. | अस्मिन्गृहे बहवः गवाक्षाः, चत्वारः कक्षाः, चतुःषष्ठि शिंशिपाया स्थूणा निम्बस्य कपाटानि अनेकान्यन्तद्वाराण्युपस्थितानिसन्ति. |
| क्या सब किवाड़ें बाहर भीतर की जंजीर वाली हैं ? | बाह्यस्याभ्यन्तरस्य किं सर्वाण्यरराणि शृङ्खलामयानि सन्ति । |
| हां । सोने के कमरे में जाकर मेरा बिछौना बिछादो। तू कहां सोता है. | ओम् । शयनागारे गत्वा ममास्तरणमास्तारय त्वङ्कुत्र स्वपिषि. |
| गरमियों में और बर्सात में अट्टे पर और दूसरे मौसम में घर के भीतर. | ग्रीष्मे वर्षतौ चाट्टालकेऽन्यस्मिन्नृतौ गृहाभ्यन्तरे. |
| क्या वहां पंखा भी है ? है तो. | किं तत्र व्यजनमप्यस्ति ? अस्तितु. |
| कल मैं छप्पर बन्दों से छप्पर छाऊँगा. | श्वोऽहं तृणपटलकारेभ्यस्तृणपटलमाच्छादयितास्मि. |

## गृहस्थ और वर्तन इत्यादि का वर्णन—गृहस्थानांविशेषाः पात्रविशेषाश्च।

| हिन्दी। | संस्कृत। |
|---|---|
| तुम्हारे घर की बड़ी ऊंची हवा रोकने वाली भीतियाँ हैं. | तव वेश्मनो ऽत्युन्नता वायुरोधका भित्तयस्सन्ति. |
| बिना पानी की जगह में मैं एक कूआ बनवाऊं यह चाहता हूँ | निर्जलभूमौ निर्मापयेयमेकं कूपमित्यभिलषामि. |
| मैं भी अव्वलतो कच्ची ईंटों का, हाथ चलने पर पक्कीईं ईंटों का घर बनवाऊंगा. | अहमपि प्रथमन्तु आमेष्टकानां, सति वैभवे पक्वेष्टकानामेव गृहं निर्मापयिष्यामि. |
| घर में सीढ़ी ज़रूर रखना चाहिये. | वेश्मनि सोपानमवश्यं निर्मातव्यम्. |
| तुम्हारे शहर में कोई तलाव या बावड़ी है. | अस्ति कश्चित्तड़ागो वापिका वा तव नगरे. |
| घर की देहली पर बैठ कर कभी मत खाओ. | गृहावग्रहण्यां स्थित्वा कदापि मा भुङ्क्ष्व. |
| छत के ऊपर चिकनी मिट्टी डाल दो. | पटलस्योपरि स्निग्धां मृत्तिकामापातय. |
| पतनाला तो पक्की ईंटों से बनवा कर चूना से लिप्पी करा दो. | प्रणालन्तु पक्वेष्टकाभिर्निर्माप्य चूर्णेन सुधया वा लेपय. |
| बलदेव के घर में मोरी बड़ी छोटी है और परेंड़ा बहुत ऊँचा है. | बलदेवस्य गृहे जलनिर्गमोऽतीव सूक्ष्मः जलस्थानं चातीवोन्नतमास्ति. |
| मेरे घर में चार दर्वाज़े हैं दो पुरुषों के और दो स्त्रियों के. | सन्ति चत्वारि द्वाराणि मम वेश्मनि द्वे पुरुषाणां द्वे स्त्रीणाञ्च. |
| हमारे घर में छज्जे नहीं हैं इसी से बौछार घर में भीतर घुस जाती है. | अस्मद्गृहे गोपानसी नास्ति अत एव धारासम्पातोऽन्तर्गृहे प्रविशति. |
| गृहस्थ के बर्तन बयान करो. | गृहस्थपात्राणि वर्णय. |
| बर्तन जैसे घड़ा, टोकनी, चमचा, चीमटा वा सँडासी, सोने के बर्तन, चांदी के बर्तन, पत्थर के बर्तन, कूंडियाँ, लोटा परात, गिलास, | पात्राणि, यथा घटः, स्थाली, दर्विः, कङ्कमुखं, स्वर्णपात्राणि, रजतपात्राणि, अश्मपात्राणि, लगुडः, बृहद्भाजनं, पानपात्रं, |

## कहावत इत्यादि का वर्णन—लोकोक्तिविशेषाः ।

| हिन्दी । | संस्कृत । |
| --- | --- |
| ३५ सांप छछून्दर की कहावत. | ३५ पञ्चत्रिंशः सर्पछुछुन्दरीन्यायः. |
| ३६ छुरी खर्बूजे की कहावत. | ३६ षट्त्रिंशः क्षुरिकाचिर्भटिकान्यायः. |
| जहां सब तरह से एकही चीज़ का नुक्सान हो वहां यह दोनों कहावतें इस्तेमाल होती हैं. | यत्र सर्वथा एकस्य वस्तुन एव हानिः सम्भाव्यते तत्र इमौ न्यायौ प्रवर्तेते । |
| जैसे किसी सांपने मूस के धोखे छछून्दर पकड़ली अब उसकी बू से जान कर उसको उगलना चाहता हुआ भी कोढ़ के डर से नहीं उगलता और अन्धे पनके डर से न निगलताही है इसी से बड़े संकट में पड़ा हुआ है (अर्थात् दोनों तरह से सांपही की हानि है) छुरी जब खर्बूजे पर गिरे तो भी खर्बूजे काही नुक्सान और जो खर्बूजा छुरी पर गिरे तो भी खर्बूजे काही नुक्सान होता है. | यथा केनचित्सर्पेण मूषकभ्रमाद्दीर्घतुण्डिका कवलिता अधुना तद्गन्धात्तामुज्जिगीर्षुरपि कुष्ठभयान्नोद्गिरति अन्धत्वभयान्न गिलत्येवातः महत्सङ्कटे पतितः क्षुरिका यदि चिर्भटिकामुपरिपतेत्तदापि चिर्भटिकाया एव हानिः यदि चिर्भटिका क्षुरिकामुपरि पतेत् तदापि चिर्भटिकाया एव हानिः. |
| ३७ घड़े के भीतर दीपक की कहावत. | ३७ घटप्रदीपन्यायः. |
| जहां कहन मात्रही किया जाय अपनी अक़्ल से कुछ कम ज़्यादह नहीं वहां, अथवा तालिबइल्म को केवल किताब में ही बोध हो और जगह नहीं वहां यह न्याय प्रवृत्त होता है. | यत्र कथनमात्रमेव क्रियते नतु न्यूनाधिक्यं स्वबुद्ध्या, तथाथवा विद्यार्थिनः पुस्तकमात्रे एव बोधः नत्वन्यत्र तत्रायं न्यायः प्रवर्तते. |
| जैसे घड़े में रक्खा हुआ दीपक घड़े के उदर मात्र को ही प्रकाशित करता है तैसेही और भी जानो. | यथा घटनिष्ठो दीपो घटस्योदरमात्रमेव भासयति तथा प्रकृतेऽपि. |

## कहावत इत्यादि का वर्णन—लोकोक्तिविशेषाः ।

| हिन्दी । | संस्कृत । |
|---|---|
| ३८ पोस्ती और मल्लाह की कहावत | ३८ अहिभुक्कैवर्तन्यायः. |
| इस कहावत से तादात्म्य (अपने आपेका) अध्यास (भ्रम) जानना। जैसे कोई पोस्ती नाव पर चढ़ा वह वहां बहुत से आदमियों को देखकर किसी से मैं बदल न जाऊं इस अकल से अपने पांव में रस्सी बांध कर पीनक में आगया मल्लाह ने हंसी के लिये उसके पाँव से उस रस्सी को खोल कर अपने पाँव में बाँध लिया. | एनेन न्यायेन तादात्म्याध्यास एव ज्ञेयः यथा कश्चिदहि (पोस्ती) भुग्नावमारुरोह सच तत्र बहुजनसमुदायं दृष्ट्वा केनचिन्मे विनिमयो न स्यादिति धिया स्वपादे रज्जुं बद्ध्वा तन्द्रां प्राप कैवर्तश्चापहासार्थं तत्पादात्तां मोचयित्वा स्वपादेवबन्ध. |
| नाव के पार जाने पर उतरते वक्त वह पोस्ती अपने पाँव में रस्सी न देख कर और मल्लाह के पांव में उसे देख कर यह मैं हूं और मैं यह हूं यह अपने दिल में निश्चय कर वह झगडा करने लगा कि अरे मल्लाह तू मैं हूं और मैं तू हूं. | नावि पारंगतायामवरोहणसमयेऽहिभुक् स्वपादे रज्जुमदृष्ट्वा कैवर्तपादे च तां दृष्ट्वाऽहमयमयमहमिति स्वहृदि निश्चित्यारे कैवर्त त्वमहं महञ्च त्वमिति तेन विवादं कृतवान् इति. |
| ३९ रीता घड़ा बोले घनां. | ३९ रिक्तो घट एवाधिकं शब्दायते न्यायः |
| मूर्ख लोगही अक्सर इधर उधर बका करते हैं पण्डित नहीं. | अपण्डिता एव बहुधा इतस्ततो विकत्थन्ते नतु पण्डिताः. |
| ४० बाँझ क्या जाने प्रसूता की पीर जिस के लगे सोई जाने. | ४० प्रसूतैव हि जानाति पुत्रप्रसववेदनामितिन्यायः स्पष्टः. |
| ४१ अन्धों में काणा सरदार जहां पेड़ नहीं वहां अण्डही रूख. | ४१ निरस्तपादपे देशे एरण्डोऽपि द्रुमायते. |
| ४२ जितने मुंह उतनी बात. | ४२ यावन्ति मुखानि तावतीः वार्ताः. |

## कहावत इत्यादि का वर्णन—लोकोक्तिविशेषाः ।

| हिन्दी । | संस्कृत । |
| --- | --- |
| ४३ जैसा देव वैसी पूजा. | ४३ यादृशो यक्षस्तादृशो बलिः. |
| ४४ गये चौबे होने छब्बे दुबे ही रह गये. | ४४ वृद्धिं मिच्छतो मूलं विनष्टम्. |
| ४५ नई नाइन बांस का नहना. | ४५ नूतना नापिती काचित् तस्या न गर्छिद्वेणुकः. |
| ४६ नये बाबाजी गाजर को संख, बज्यौ तो बज्यौ नहीं कुतर खायौ. | ४६ विरागी नूतनो गृञ्जनस्य शङ्खः यदि ध्मातस्तर्हि ध्मातोनोचेच्चर्वितः |
| ४७ नाच न जाने आंगन टेढ़ा. | ४७ अङ्गणं शंसते वक्रं नर्तनाकुशलो जनः. |
| ४८ किसी का घर जले कोई तापे. | ४८ कस्यचित्तुदहेद्गेहम कश्चिद्धस्तौ प्रतापयेत्. |
| जमाई, उदर, स्त्री, अग्नि, और तालाव ये पाँच जकार मुश्किल से भरे जाते हैं. | जामाता जठरं जाया जातवेदा जलाशयः पूरिता नैव पूर्यन्ते जकाराः पञ्च दुर्भराः । १ |
| माता पैदाइश की जगह, गंगाजी, भगवान और पिता ये पांच जकार मुश्किल से मिलते हैं. | जननी जन्मभूमिश्च जाह्नवी च जनार्दनः जनकः पञ्चमश्चैव जकाराः पञ्च दुर्लभाः । २ |
| —अथ हंसी के श्लोक हैं— | —अथ हास्यरस श्लोकाः— |
| १ दो स्त्रियोंवाला मनुष्य बिलके बाहर और बिल के भीतर बैठे हुए बिल्ली और साँप के बीच में मूसे के नाँई भान हुआ करता है. | विलाद्बहिः विलस्यान्तः स्थितमार्जारसर्पयोः मध्ये चाखुरिवाभाति पत्नीद्वययुतो नरः । १ |
| २ विष्णु का आगमन सुन जल्दी से सर्पकी रस्सी बना हाथी के चर्म का कौपीन पहन शिव जी आगे दौड़े, अब सांप गरुड़ जी को देख कर कम्पित चित्त हुआ पृथ्वी पर गिर | विष्णोश्चागमनं निशम्य सहसा कृत्वा फणीन्द्रं गुणं, कौपीनं परिधाय च मेकारिणः शंभुः पुरो धावति, दृष्ट्वा विष्णुरथं सकम्पहृदयः सर्पोऽपतद्भूतले, कृत्तिर्विस्खलिता ह्रिया न- |

## कहावत इत्यादि का वर्णन—लोकोक्तिविशेषाः ।

| हिन्दी । | संस्कृत । |
| --- | --- |
| पड़ा और गज चर्म फिसल पड़ा अथ लज्जा से नीचे को हुआ है मुख जिनका ऐसे नग्नहर हमारी रक्षा करो. | तमुखो नग्नो हरः पातु वः । २ ॥ |
| ३ दूसरों का अन्न पाकर हे मूर्ख अपने प्राणों पर दया मत कर, दूसरों का अन्न इस लोक में दुर्लभ है और प्राण तो हर जन्म में मिलते हैं. | परान्नं प्राप्य दुर्बुद्धे मा प्राणेषु दयां कुरु परान्नं दुर्लभं लोके प्राणा जन्मनि जन्मनि । ३ । |
| ४ हे असंख्य मनुष्यों की सफ़ाई करने वाले हकीम जी तुम्हारे लिये नमस्कार है यमराज तुम पर अपना भार रख आप मौज करता है. | वैद्यराज नमस्तुभ्यं क्षपिताशेषमानव त्वयि विन्यस्तभारोऽयं कृतान्तः सुखमेधते । ४ । |
| ५ गणेशजी के वाहन मूषक को भूखा सर्प खाना चाहता है उस सर्प को स्वामकार्तिक का मोर खाना चाहता है और पार्वती का सिंह गणेशजी को खाना चाहता है पार्वती गंगाजी से द्वेष करती हैं और शिवके मस्तक की अग्नि चन्द्रमा से ईर्षा करता है इस लिये कुटुम्ब के कलह से दुखी हुए महादेव जी भी ज़हर पीगए. | अत्तुं वाञ्छति वाहनं गणपते राखुं क्षुधार्तः फणी, तञ्च क्रौञ्चपतेः शिखी च गिरिजासिंहो ऽपि नागाननम्, गौरी जह्नुसुतामसूयति कलानाथं कपालानलो, निर्विण्णः स पपौ कुटुम्बकलहादीशोऽपि हालाहलम् । ५॥ |
| अथ विवाहों में निमन्त्रणी के श्लोक छ. | अथोद्वाहामन्त्रणश्लोकाः षट्. |
| १ आप सज्जनों के सम्बन्ध से मुझ को क्या २ न लाभ हुआ ! बरन सब ही लाभ हुआ, प्रथम जन्म सफल | जातं जन्म कृतार्थतां विकसितं पुण्याम्बुजानां वनं छिन्ना संप्रति सर्वपापपटलिर्दुःखान्धकारो गतः, आ- |

## कहावत इत्यादि का वर्णन—लोकोक्तिविशेषाः ।

| हिन्दी । | संस्कृत । |
|---|---|
| हुआ, पुण्य रूपी कमलों के बन खिले, सम्पूर्ण पाप रूपी वृक्ष अब कटा, दुःख रूपी अन्धकार गया आनन्द रूपी अङ्कुर कोटि प्रगट हुई, और विघ्न रूपी घन दूर हुआ इत्यादि । १ । | नन्दाङ्कुरकोटयः प्रकटिता विघ्नाः पाटिता, सम्पन्नं भयनां कृतं सुकृतिनां किं किं न लब्धं मया ।१। |
| हे द्विजेन्द्र शिरोमणे ! तीनों जगत के बीच में आप के दूध के समुद्र तुल्य निर्मल यश को सुन कर कौन से पुरुष शिर नहीं कँपाते हैं ! वरन सबही शिर कपाते हैं । इसी लिये भगवान् महाजी ने पृथ्वी के नाश होने की शंका से शेषजी के कान नहीं बनाये ।२ | न कम्पयन्ति तावके यशो निशम्य के शिरः पयः पयोधिनिर्मलं द्विजेन्द्र त्रिजगत्त्रये । अतः पितामहो विभुर्भुजङ्गमेश्वरस्य नो चकार शब्दधारकान्धरपिधानशङ्कया । २ । |
| आपकी कीर्ति रूपी लता ने, दया के आश्रय को लेकर तीनों लोक रूपी मांचे को पाकर नक्षत्र रूपी कलियां धारण की तिन में से एक चन्द्रमा रूपी कली खिली जिसने त्रिलोकी को दीप्त किया। अब मैं नहीं जानता कि उन सब कलियों के खिलने पर कैसा फल होगा । ३ । | त्वत्कीर्तिव्रततिस्समीरपदवीमासाद्य लोकत्रयं, मञ्चं व्याप्य चिरन्बभार कलिकाः नक्षत्ररूपेण याः तासां प्रस्फुटमेकमिन्दुकुसुमं त्रैलोक्यमादीपयत्, नो जाने विकचासु तासु भविता सर्वासु कीदृक् फलम् । ३ । |
| —घर की ओर का— | घर पक्षे । |
| हमने आप के यहां, घरों में जो अलभ्य सुख भोगा है सो उसकी कैसे प्रशंसा करें, हमारे संसार में प्राणों सेभी प्यारा अलङ्कृत यह कन्या रूपी | अस्माभिर्यदभोजि गेहविरलं शातं स्तुमः कथम् । कन्यारत्नमदाय्यलङ्कृतामिदं प्राणाधिकं स्तनौ । यावच्चित्तमकारि मित्र भवतास्वेनाग्रा- |

## कहावत इत्यादि का वर्णन—लोकोक्तिविशेषाः।

| हिन्दी। | संस्कृत। |
|---|---|
| रत्न दिया। और हे मित्र! चित्तानुसार आपने अन्न जलादि से सेवाभी की। अब उन श्री कृष्ण महाराज की जय हो जिनकी कृपा से हम और आप सम्बन्धी हुए. | नादिभिः। श्रीकृष्णो जयताद्धि यस्य कृपया सम्बन्धिनः स्मो वयम्। १। |
| —दोनों ओर की— | उभय पक्षे। |
| हे प्रभो! जो अभिलाषा हमारी आपके दर्शनों की बहुत दिनोंसे थी वह आज जिसने पूर्ण की वह श्रीकृष्ण महाराज आपका (हमारा) कल्याण करे। २। | यदौत्कण्ठ्यं चिरादासीद्दर्शने भवता प्रभो। तदद्य पूरितं येन स कृष्णः शन्तनोतु वः। २। |
| —कन्या पक्षवालों की— | कन्या पक्षे। |
| हे प्रियवर। जिस समय से आपका दर्शन इस जगह हुआ तभी से हमारे दुःख समूह आप की कृपा से नष्ट हुए और हर्षका पार नहीं है। और दासी तुल्य कन्या, भोजनविधि में शाक और द्रव्यविधि में सुपारी जोर२ भक्ति से आपको समर्पण किया वही२ हर्ष पूर्वक आपने स्वीकार किया यह एक हमारा बड़ाही भाग्य है। ३। | कालादारभ्य यस्मात्प्रियवर भवतां दर्शनं नोऽद्य जातम्। दुःखौघा नो विनष्टः प्रभुवर कृपया नास्ति हर्षस्य पारः दासीकल्पा च कन्या ह्यशनवसुविधौ शाकपूगीफलादि यद्यद्भक्त्यार्पितं वो नियतिरियमहो स्वीकृतं तत्सहर्षम्। ३। |
| पक्षियों का राजा गरुड़ उनका राजा विष्णु उनका पुत्र मदन तिनके शत्रु शिव उनके चार अक्षर का नाम मृत्युञ्जय सो इसका पहला आधा आप के शत्रुओं के यहां और पिछला आधा आप के यहां रहे। १। मृत्युंजय | अथाशीर्वादात्मकाः श्लोकाः<br>विराजराजपुत्रारेर्यन्नामचतुरक्षरम्। अर्धं वसतु शत्रूणामुत्तरं तव मन्दिरे १ |

## कदम्बत इत्यादि का वर्णन—लोकोक्तिविशेषाः ।

| हिन्दी । | संस्कृत । |
| --- | --- |
| १ आकाश में कौन शोभित होते हैं—(महेशः) २ राक्षसपति किससे मारा-(रामेण) ३ समुद्र में कौन डूबता है-(मैनाकः) ४ तरुणियों का विलास कैसा है (मंथरं) ५ सज्जनों से क्या किया जाता है (सन्धिरं) ६ राजा का पत्र क्या है (सारङ्गः) ७ अर्जुन का धनुष कौन है (गांडीव) ८ राम की स्त्री का हरने वाला कौन (रावणः) मेरे प्रश्न के उत्तर का जो मध्यमाक्षर पद है वह तुम्हारे लिये आशीर्वाद है। २। | कः खे भाति हतो निशाचरपतिः केनाम्बुधौ मज्जति। कः कीदृक् तरुणी विलासगमनं किं कार्यते सज्जनैः। पत्रं किं नृपतेः किमर्जुनधनुः को रामरामाहरः प्रश्नोत्तरमध्यमाक्षरपदं यस्तत्तवाशीर्वचः। २। |
| स्त्रियों की लावण्यता कहां है-(वपुषि) आकाश में कौन विचरते हैं-(अण्डजाः) सब से ऊंची आवाज़ किनकी होती है-(भेरीणां) स्त्री पुरुष कहां विहार करते हैं-(एकान्ते) भगवान् सीतापति ने किन में अपना पौरुष दिखाया-(रक्षःसु) इन प्रश्नों के उत्तर का जो बीच के अक्षर घटित देव हैं वह तुम्हारे कल्याण के लिये हो। ३ | लावण्यं क नु योषितां नभसि के सञ्चारमातन्वते। केषामुच्चतरा भवन्ति निनदाः क प्रीतयो दम्पती। कपुस्यं प्रकटीचकार भगवान् सीतापतिः पौरुषम् तत्प्रश्नोत्तरमध्यवर्णघटितो देवोऽस्तु वः श्रेयसे। ३। |

## तेईसवां अध्याय—त्रयोविंशोऽध्यायः।

### अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, प्रहेलिकाश्च।

श्रीमच्छारदापीठाधीश्वरश्रीजगद्गुरुशङ्कराश्रमाचार्येभ्यो
निवेदितं प्रशंसापत्रम्मयराष्ट्रवासिभिः।

# प्रशंसापत्रम्।

श्रीशः पायात्।

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यपदवाक्यप्रमाणपारावारपारीण, यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ, तपश्चर्याचरणचक्रवर्त्यनाद्यविच्छिन्नगुरुपरम्पराप्राप्तषण्मतस्थापनाचार्य, साङ्ख्यत्रयप्रतिपादकवैदिकमार्गप्रवर्तक, निखिलनिगमागमसारहृदयश्रीमत्सुधन्वनः साम्राज्यप्रतिष्ठापनाचार्यश्रीमद्राजाधिराजगुरुभूमण्डलाचार्यचातुर्वर्ण्यशिक्षकगोमतीतीरवासश्रीमद्द्वारकापुरवराधीश्वरपश्चिमाम्नायश्रीमच्छारदापीठाधीश्वरश्रीमत्केशवाश्रमस्वामिदेशिकवरकरकमलसञ्जातश्रीशारदापीठाधीश्वरश्रीनृसिंहराजेश्वरशङ्कराश्रमस्वामिनां पदारविन्देषु मयराष्ट्रनगरीनिवासिनां ब्राह्मणवैश्यादीनां प्रणतिपुरस्सरा विज्ञप्तयस्समुल्लसन्तुतराम्।

भगवतामेतद्देशे श्रीमच्छारदापीठपूर्वाचार्यपारम्पर्य[illegible] मधुपुरीप्रमुखेभ्यः प्रस्थानेभ्यः एतच्चातुर्मास्यप्रवृत्त[illegible] (मेरठ)पत्तने समासीनस्याप्रौष्ठपदाः यथैवद्वार्वी[illegible] [illegible] अहमदाबादसूरतसिद्धपुरोज्जैन्यागराप्रभृतिषु [illegible] वैदिकसिद्धान्तान्तर्हृदयप्रधानपदार्थाः सन्तु [illegible] आदिकाः स्वस्वनियतधर्मानुवर्तिन्यः [illegible] द्यावधि मेयपत्तने (मयराष्ट्रे) श्रुतिस्मृतीतिहासपुराण[illegible] प्रमाणगणैर्वेदानां परमेश्वरैकनिर्मातृत्वस्वतः [illegible] यत्वप्रतिमाराधनस्योपासनान्तर्गतत्वा यथोर्द्धपुण्ड्र[illegible] दिप्रक्रियायाः पुनः श्रुतिमननकर्तिगोस्वामि[illegible]

## अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, प्रहेलिकाश्च ।

व्रततीर्थादिसेवनप्रमाणमात्रसञ्चारितत्यादयो धर्माः तत ऊर्ध्वं योगज्ञानयोस्तद्वदेव सपरिकरनिरूपणं चात्युच्चैरादरभरादभ्यधायि । एतावता सर्वं चात्र सदसद्विचारचातुरीधुरीणाश्चापगतशङ्काकलङ्कसाभान्ध्याध्यासिताः प्रसन्नात्मानोऽभवन्त यथावत् येच तत्र विप्रतिपद्यमानमनसः प्रमादिजनाः तेऽपि चात्यर्थं निजमतिकर्दमेभ्यो यथोदाहृतप्रबोधवारिधाराभिः प्रविमुक्ततराः भवन्त्येव तत्वतः इत्थमत्र सर्वे वयं महाश्चर्यैश्वर्यादयो जगद्गुरुभिरतितरां कृतार्थीकृताश्चानन्दिता अभवाम शिष्यगणाः । इत्थञ्च जगद्गुरुचरणेऽस्मत्कर्तव्यतानुरूपञ्च श्रद्धाभक्तिभ्यां यथोचितः सत्कारः प्रयुक्तः प्रेम्णा परं स्वीकृतोऽयं गुरुभिरितिमङ्गलमेव सर्वशो नः सर्वेषाम् । सदैव चैवमेवमेव विजययात्रया कृतार्था कर्तव्याः शिष्यजनाः श्रीमद्भिर्जगद्गुरुभिरिति महतीहीयमस्माकमभ्यर्थना ।

भवदीयकृपाभिलाषिणो
प्रयागनिवासिनो शिष्यजनाः ।

| हिन्दी । | संस्कृत । |
|---|---|
| गुरु के लिये चिट्ठी ।<br>श्रीमान् कृष्णमहाराज के लिये नमस्कार है<br>श्रीमान् विद्वानों में अति श्रेष्ठ, सम्पूर्ण गुणी लोगों के गुण समूहों से सुशोभित, अविद्या और जड़तारूपी अंन्धेरे के दूर करने वाले, अमित प्रभाव वाले, सम्पूर्ण विद्या रूपी समुद्र के पारगत, अत्यन्त सज्जनता की मेड़ दया उदारता और चतुराई की खान, विनय सीधापन और ज्ञानके स्थान श्रीमान् लक्ष्मीनारायण जी को ब्राह्मण वंश के चरण पंकज सेवक सुखानन्द त्रिपाठी की अनेक नमस्कार वचना. | गुरुन्प्रतिपत्रमिदम् ।<br>श्रीमते रामानुजाय नमः ।<br>श्रीमत्परमविद्वद्वर्य्याखिलगुणिगुणगणालङ्कृताविद्याजाड्यान्धकारापहामितप्रभावाखिलविद्यापारावारपारीणातिसौजन्यावधिदयौदार्य्यवैदग्ध्यशिष्यनिधिविनयार्जवविवेकनिलयेषु श्रीमल्लक्ष्मीनारायणशर्मसु विप्रान्ववायांघ्रिपङ्कजसेविसुखानन्दत्रिपाठिकृता अनेकशो नतयः समुल्लसन्तुतराम्. |

## अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, प्रहेलिकाश्च ।

| हिन्दी । | संस्कृत । |
| --- | --- |
| ईश्वर कृपा से दोनों जगह कल्याण हो आगे हाल यह है कि कार के महीने से लेकर अबतक कोई पत्र आपने मेरे पास नहीं भेजा इस लिये मैं आपकी राजी खुशी जानने को बहुत फ़िकर मन्द हूँ अब आशा है कि आप चिट्ठी भेजने में जल्दी करेंगे. | भव्यं स्तादुभयत्र श्रीशानुकम्पया उदन्तोऽयमग्रे वाच्यः यत् आश्विनमासादारभ्याद्यावधि भवद्भिर्न किमपि दलम्प्रेषितं मम सन्निधायतोऽतीयोत्कण्ठितोऽस्मि श्रीमतां श्रेयो ज्ञातुमधुना त्वरिष्यन्ति भवन्तः पत्रप्रेषण इत्याशासे. |
| यहां प्लेग रोग भादों से बहुत ज्यादह है हजारों मनुष्य और स्त्री इसके ग्रास होगये जीते हुए भी और मनुष्यों के होश फ़ाख्ता हैं ईश्वर अब तो कल्याणही करे। और कोई नया हाल नहीं है जिस को लिखूं. | अत्र महामारीरोगो वरीवर्ति नभस्याभाद्रपदात् सहस्रशो नराश्चास्य कवलत्वङ्गताः जीवन्तश्चाप्यन्येऽस्वस्थचित्तास्सन्ति ईश्वरोऽधुनातु क्षेमेव विदध्यात् । नचान्यद्भूतनं वृत्तं यल्लिखेयम्. |
| सम्वत १९६१ वैक्रमीयः आश्विनकृष्ण पक्षे द्वितीयारविवार — आपका कृपापात्र सुखानन्दत्रिपाठी | सम्वत् १९६१ वैक्रमीयेऽब्दे आश्विनेऽसिते पक्षे द्वितीया रवियुता — भवदीयः कृपापात्र सुखानन्दत्रिपाठी |
| २ शिष्य के लिये चिट्ठी । | शिष्यस्प्रतिपत्रमिदम् । श्रीशः पायात् । |
| स्वस्ति श्री विनयार्जव आदि सम्पूर्ण गुण सम्पन्न, विद्यारूपी कमल के भ्रमर, अपने कुलके गुण रूपी भूषणों से भूषित परम श्रद्धालु गुरु शुश्रूषा में तत्पर द्वारकाप्रसाद गुप्त को हमेशा अपने अच्छे शिष्यों की कुशल चाहने वाले सुखानन्द त्रिपाठी की अनेकों आशीर्वाद पहुंचना. | स्वस्तिश्रीमद्विनयार्जवाद्यखिलगुणसम्पन्नविद्याकुशेशयचञ्चरीकस्वकुलगुणभूषणभूषित परमश्रद्धालुगुरुशुश्रूषणतत्परद्वारकाप्रसादाख्ये गुप्ते सदैव सच्छिष्यकुशलाभिलाषिणस्सुखानन्दत्रिपाठिनोऽनेका आशिषो वाच्याः. |

अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, महोत्सिकाश्च ।

| हिन्दी । | संस्कृत । |
|---|---|
| यहां कुशल है तुम्हारे यहां भी कुशल रहे । प्रिय ? बहुत दिन बीते तुमने कोई भी चिट्ठी नहीं भेजी यह बड़ा अचम्भा है क्योंकि पहिले हर महीने राजी खुशी की चिट्ठी भेजने का तुम्हारा एक मामूली कायदा था अब न मालूम क्या हुआ. | अत्र शं तत्रास्तु । भद्र ? बहून्यहानि व्यतीतानि त्वया न किमपि पत्रम्प्रेषितमितिमहदाश्चर्यम् यतस्तव पूर्वं प्रतिमासं कुशलपत्रप्रेषणे साधारणोनियम आसीदधुना किंजातमिति न जाने. |
| फिर तुम्हारा सब ओर से कल्याण हो और विद्या में ज्यौंकी त्यौं महनत करके हम गुरुजन लोगों के आनन्द देने वाले हो यह मेरा आशीर्वाद है. | चरं कुशलमस्तु सर्वतस्ते विद्यायाञ्च यथाविधि परिश्रमं कृत्वाऽस्मदादीनां गुरुजनानामानन्दप्रदो भवतादितीयम्मदीयाशीः. |
| तुम्हारे संस्कृत पढ़ाने वाले वहां कौन हैं यह भी खबर देना और कोई नया हाल हो यह भी । मिती पौष कृष्णापड़वा शुक्रवार सम्वत् १९६४ विक्रमी. | तत्र संस्कृताध्यापकास्तत्र के इत्यपि सूचनीयमन्यच्चापि नव्यं वृत्तमिति । एकषष्ट्युत्तरैकोनविंशतितमे विक्रमेऽब्दे पौषकृष्णप्रतिपच्छुक्रयुता पत्रलेखतिथिः. |
| तुम्हारा कुशलेच्छुक, सुखानन्द त्रिपाठी । | युष्मत्कुशलाभिलाषी, सुखानन्दस्त्रिपाठी । |
| वृन्दावन निवासी पौराणिक पं० प्यारे लालजी मिश्र कोलिखे छन्दो बद्ध चिट्ठी. | वृन्दावननिवासिने पुराणाचार्य प्यारेलालशर्माणम् सुहृदम्प्रतिपत्रमिदम् पद्यैः |
| सो० चिट्ठी पाई काल, तुम्हरे कर कमलन लिखी । जिनज्वर दशा सँभाल, मोहि स्वस्थता देदई । | पत्रिका ह्यो मया प्राप्ता युष्मद्धस्ताब्जलिखिता । यया ज्वरदशा मेऽपि कृता वै निगतज्वरा । १ ॥ |
| सो० क्षमहु मोर अपराध, पत्र न भेजन कर जो । कारण देह कुसाध, अनृत नहीं कछु या विषे । | क्षम्यतामपराधो मे, पत्राप्रेषणहेतुकः कारणं देहवैकल्यं, नास्त्यनृतं वचोऽत्र मे । २ । |

## अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, प्रहेलिकाश्च।

| हिन्दी। | संस्कृत। |
|---|---|
| दो० स्मरण योग्य है आप के, सुखानन्द सेवक सदा। ते अनुशासन योग्य हैं, योग्य कार्य होवहि यदा. | सर्वदा स्मरणीयोऽयं, सुखानन्दाख्य सेवकः। सदैवाज्ञापनीयश्च, मद्योग्यैः कार्यग्रामकैः। ३। |
| दो० ग्रामहिं जबहीं जाइहौं, पत्र तुम्हार सुनाँउ। घर जैसो कोई कहै, पुनि प्रिय तुमहिं जनाउँ. | ग्रामं यदा गमिष्यामि, श्रावयिष्यामि ते छदः। पुनस्ते सूचयिष्यामि, अनुशास्ति यथा प्रभोः। ४। |
| दो० जो कछु उत्तम जीविका, मम भ्राता को जोय। तौ तिहिको भेजौं तभी, जब अनुशासन होय। | यदि स्यादुत्तमावृत्तिर्भ्रात्रे मे मृगयन्तु ताम्। तदैव प्रेषयिष्यामि यदानुज्ञाऽत्र लप्स्यते। ५। |
| सात पाँच नव एक युत, वर्ष मास आसोज। शुक्ल पक्ष दुतिया लिखी, सुखानन्द निज ओज। इतम शुद | नगबाणाङ्कभूवर्षे आश्विनस्य परे दले। लिखितेयं द्वितीयायां सुखानन्दत्रिपाठिना। ६। इत्यलम् |
| और भी मित्र केलिये— | अन्यच्च मित्रप्रति— |
| श्री शङ्करजी कल्याण करें २८।११।०४ कानपुर | श्रीशङ्करः शङ्करोतु २८।११।०४ कर्णपुरम् |
| मित्रवर्य सुखानन्द त्रिपाठीजी नमस्कार | मित्रवर्य सुखानन्दत्रिपाठिन्। नमोनमः |
| ईश्वर की कृपा से अभी तक हम लोग कुशल हैं और आप की कुशल चाहते हैं। बहुत दिन से आप की चिट्ठी न मिलने से मैं फ़िकर मन्द हूँ इसलिये जल्दी अपने राजी खुशी के समाचार से यह मित्र खुश करना चाहिये। तीन महीने से यहाँ प्लेग की बीमारी भी रोज बरैह बेशुमार मनुष्यों को ग्रास करती जाती है। अब मैं कुटुम्ब सहित गङ्गा किनारे | विश्वेशकृपयाद्य यावत्कुशलिनो वयं भवतां कुशलं चाशंसामहे। चिराद्भवताम् कृपापत्रमलब्ध्वा चिन्ताक्रान्तोस्मीति शीघ्रं स्वकुशलप्रवृत्यानन्दयितव्योऽयं मित्रजनः। मासत्रयादत्र महामारीरोगोऽपि प्रत्यहमसंख्यजनान् कवलयति। सम्प्रत्यहं सपरिवारो गङ्गातटे गङ्गामन्दिरे निवसामि। गृहे पुत्रादयः सर्वे ज्वरपीडिता आसन्नतः स्वकुशलवृत्तान्ते- |

## अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, प्रहेलिकाश्च।

| हिन्दी। | संस्कृत। |
| --- | --- |
| गङ्गा मंन्दिर में रहता हूं घर में लड़के वगैरह सबज्वर से पीड़ित थे इसलिये अपनी राजी खुशी के समाचार से आप को खुश न कर सका ऐसा जान कर यह मित्र क्षमा योग्य है। सब उस्तादों से मेरी यथा योग्य प्रणाम आशीर्वाद कहना। वहां भी प्लेग रोग भय है यह सुना जाता है इसलिये वहां का सब हाल लिखना. | न श्रीमन्तं मोदयितुं नाशक्नवमित्यवगम्य क्षन्तव्योऽयं वयस्यः। सर्वेभ्योऽध्यापकेभ्यो मदीया यथोचितं प्रणामा आशिषो वा वक्तव्याः। तत्रापि महामारीरोगो वर्तते इदानीमिति श्रूयतेऽतः कृपया तत्रत्यं सर्वं वृत्तं लेख्यमितिशम्. |
| पुराने विद्यार्थियों को मेरी आशीर्वाद कहना. | प्राचीनच्छात्रेषु मदीया आशिषो वाच्याः |
| अगहन वदि ६ } आपका मित्र रामचन्द्र शास्त्री | मार्गशीर्ष कृष्णषष्ठी } भवदीयो वयस्यः रामचन्द्रशास्त्री |
| और दूसरी मित्र के लिये चिट्ठी— | अन्यच्च मित्रप्रतिपत्रम्. |
| श्री राधा माधव की जय हो. | श्रीराधामाधवौ विजयेतेतराम् अलीगढ़तः |
| श्रीमान् सम्पूर्ण गुणसमूहयुक्त, विद्या समुद्रपारगामी, भ्रमरूपी अन्धकार को दूर करने वाले सूर्यरूप, अपनी वाणी समूह से तिरस्कृत किया है कालिदासादि पण्डितों को जिन्होंने, नवीन केशर से शोभित हैं पूज्य चरणकमल जिनके, मित्र शिरोमणि, हरकृष्ण शास्त्री जी को यहां से विद्या रूपी भूषणों से भूषित ओ भवरमति | श्रीमदखिलगुणौघाढ्यविद्यापारावार- पारीणभ्रममतिमिरोच्छेदकमार्तण्डन्य क्कृतवाग्जालकालिदासादिप्रज्ञ,नूतन किञ्जल्कभूषितपूज्यपादपङ्कजेषु सु हृच्छ्रेष्ठेष्वितो विद्यालङ्कारालङ्कृतप्र वरमतिभृत्यभृत्यविश्वर्ग्यचरणसरो- जषट्पदसंसारसरित्तुङ्गतरङ्ग— ह्यमानगृहमेधिधर्मभाराक्रान्तसुखा- नन्दत्रिपाठिनः कृता अनेकशो नतयः |

अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, प्रहेलिकाश्च।

| हिन्दी। | संस्कृत। |
|---|---|
| ( पंडित ) उनके सेवकों का सेवक, परम विद्वानों के चरण कमलों का भ्रमररूप, संसाररूपी नद में तृष्णारूपी जल के सर्प से डसा हुआ गृहस्थ के भार से थके हुए सुरानन्द त्रिपाठी की अनेक नमस्कार प्रणाम पहुँचे। आगे हाल यह है कि मेरे अधैर्य रूपी वृक्ष को काटनेवाले, अनोखी और रसीली काव्य के से पदों की लावण्यता को जाहिर करते हुए, आपके करकमल से लिखे हुए पत्र से जो अपूर्व आनन्द प्रकट हुआ सो कहने तथा लिखने से बाहर है। वसन्त भगवान् वृक्षों के पत्तों की नाईं हमारी और आप की अभिलाषा को सफल करेगा इस प्रकार आप के वाक्य में आपही प्रमाण हैं जो यह होभी जाय तोभी आपकाही भाग्य है मुझ सरीखों का नहीं। शरीर के अस्वास्थ्य से मैंने यह चिट्ठी देर से भेजी है सो आप क्षमा करना. | समुल्लसन्तुतराम् वृत्तमिदमग्रे वाच्यम् ममाधैर्यद्रुमलोलूयमानेनाद्भुतरसिककाव्यपदच्छटासोसूच्यमानेन श्रीमत्करकुड्मलाङ्कितदलेन यो निरतिशयानन्दः सूचितः सोऽगोचरः। भगवान्पुष्पसमयः तरुपत्राणि इव मावभिलाषां सफलां विधास्यतीति श्रीमद्वाक्ये श्रीमन्त एव प्रमाणम् यदि स्यात्तर्ह्यपि श्रीमतामेव दिष्टं नच मादृशानां। शरीरास्वास्थ्यान्मया चिरादिदम्पत्रं प्रेषितमितिक्षन्तव्यं भवद्भिः श्रीमद्भिरिति. |
| मिति पोष सुदी ५ शुक्रवार सं. १९५९ वि० — आपका दर्शनाभिलाषी सुरानन्द त्रिपाठी | पौषशुक्ला पञ्चमी भृगुयुता सं. १९५९ — भवतां दर्शनेच्छुः सुरानन्द-त्रिपाठी |

## अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, प्रहेलिकाश्च ।

| हिन्दी । | संस्कृत । |
| --- | --- |
| यह अर्ज़ी है — अलीगढ़ | निवेदनपत्रमिदम् — अलीगढ़तः |
| श्री मन्महोदय हेडमास्टर साहब (वा ग़रीबपरवर सलामत) सलामत | श्रीमन्महामहिममहोदयानां मुख्याध्यापक (हेडमास्टर) महाशयानाम्पुरतः सविनयं निवेदनमिदम्. |
| महाशय ! | महाशयाः ! |
| पिछले शुक्रवार से मेरी माता जाड़े बुखार से पीड़ित है और उसका यहां कोई निरीक्षक नहीं है इसलिये मेरी हाजिरी वहां ज़रूरी है इसीलिये आपसे प्रार्थना की जाती है कि मुझे एक हफ्ते की छुट्टी मन्ज़ूर करें। आप ऐसी हालत में अवश्यही मञ्ज़ूर करेंगे यह मेरी पूरी उमेद है. | गतशुक्रवासरान्मदीया माता शीतज्वरार्तास्ति नकोऽप्यत्र तस्या निरीक्षकः अतो ममोपस्थितिरत्रात्यावश्यिका ऽत एव मां सप्ताहस्यैकस्यावकाश मनुमन्तुं प्रार्थ्यन्ते भवन्तो ऽस्यां दशायां भवन्तएव स्वीकरिष्यन्तीत्याशापि मदीया पूर्णा. |
| ईश्वर आप सरीखे अनुग्रह शील स्वामियों की सकुटुम्ब कुशल करे और वैभव बढ़ावे यह हमारी प्रार्थना है. | ईश्वरः कुशलं विदध्याद्वैभवञ्च वर्धयेत सपरिवारेषु युष्मादृशेष्वनुग्रहशीलेषु स्वामिष्वितीयमस्माकमभ्यर्थना. |
| आपका आज्ञाकारी सेवक श्रीकृष्णदास गुप्त दर्जा ७ | श्रीमतामति- श्रद्धेयोनुचरः सप्तमकक्षाध्येता श्रीकृष्णदासो गुप्तः |
| अंग्रेज़ी तारीख १८।१२।०४ | आङ्ग्लतिथ्यादि १८।१२।०४ |
| लड़के का यह बयान ठीक है (कैफ़ियत लड़के के उस्ताद की) मणिराम उस्ताद. | सत्योऽयं लेखश्छात्रस्येति (व्यवस्थाछात्राध्यापकस्य) मणिरामोऽध्यापकः. |

## अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, प्रहेलिकाश्च ।

| हिन्दी । | संस्कृत । |
|---|---|
| लाहौर<br>१९।५।०४ | लवपुरम्<br>१९।५।०४ |
| | श्रीरामः सर्वमङ्गलम्. |
| पादप्रणामानन्तर निवेदन. | पादप्रणामोत्तरं निवेदनम्. |
| आप की चिट्ठी के माफ़िक ऋग्वेद के प्रथम मण्डल का सूक्तसंग्रह इम्तहान के उपयोगी डाँक महसूल न देकर भेजा है डाँक महसूल आपही देदेना. | भवतां पत्रानुसारेण ऋग्वेदप्रथममण्डलीयसूक्तसंग्रहः परीक्षोपयोगी प्रेषितो डाकव्ययमदत्वेति डाकव्ययो भवद्भिरेव देयः. |
| आप कौन जाति हैं और मुझ को अपना आज्ञा पालक बना कैसे कृतकृत्य किया ? | किं जातीया भवन्तो मां कथं स्वाज्ञापालकं कृत्वा कृतकृत्यं कृतवन्तः. |
| अबकी परीक्षा के समय में अपने देश को गया था इसी से मेरे पास प्रश्न पत्र नहीं आये, कोशिश करने पर जो आजायंगे तो भिजवादूंगा. | अत्रत्यपरीक्षाकालेऽहं स्वजनपदे गतवानतो मत्समीपे प्रश्नपत्राणि नागतानि यत्ने कृते आगमिष्यन्ति चेत्प्रेषयिष्ये. |
| आपका आज्ञापालक<br>पण्डित शिवदत्तदाधीच हेडपण्डित (प्रोफेसर) लाहौर कालेज. | भवदाज्ञापालकः पण्डितशिवदत्तो दधीचः लवपुरीयचिश्वविद्यालयस्य प्रधानसंस्कृताध्यापकः. |
| ईश्वररक्षा करे अलीगढ़<br>२२।५।०४ | श्रीशः पायात् अलीगढ़तः<br>२२।५।०४ |
| श्रीमान् पं. शिवदत्तदाधीचजी के—<br>चरणकमलों में नमस्कार. | नमोनमः श्रीमच्छिवदत्तदाधीच—<br>चरणपङ्कजेभ्यः |
| सेवक की प्रार्थनानुसार आपने जो ऋग्वेद सूक्तसंग्रह भेजा सो मिला। आप से महात्माओं की परोपकार | सेवकाभ्यर्थनानुसारेण श्रीमद्भिः ऋग्वेदसूक्तसंग्रहः प्रेषितः स लब्धः धन्येयं परोपकारशीलता भवादृशां महा- |

| हिन्दी। | संस्कृत। |
| --- | --- |
| शीलता धन्य है जो मुझ न जानते हुए पर भी कृपा कर के मुझे कृतकृत्य करते हुए। बहुत कहने से क्या है विद्वान् महात्माओं का परोपकार करना स्वभाव सिद्ध होता है। आप की कृपा के देखे सैकड़ों हजारों धन्यवाद भी थोड़े हैं. | त्मनाम् यन्मामपरिचितमप्यत्यनुकम्पां विधाय कृतकृत्यं कृतवन्तो भवन्तः। किम्बहुना प्रकृतिसिद्धा हि परोपकृतिर्विदुषां महात्मनाम्। शतशः सहस्रशो धन्यवादा अपि न्यूनतराः श्रीमदनुकम्पापेक्षया. |
| यह सेवक वशिष्ठ गोत्री गौड़ वंशीय है दिल्ली में अमृतसर निवासी पण्डित चुन्नीलाल शर्मा से आप का गुणानुवाद सहित नाम सुना था. | वसिष्ठगोत्रजो गौडवंशीयोऽयं सेवकः इन्द्रप्रस्थेऽमृतसरनिवासी पण्डितचुन्नीलालशर्म्मणः सकाशाच्छ्रुतवान् सगुणानुवादं श्रीमतां भवताम्. |
| गुरुजी! मेरे एक भजनलाल शर्मा विद्यार्थी ने पिछली संस्कृत परीक्षा में विशारद इम्तहान दिया था और इम्तहान देनेवालों में उसका रोल-नम्बर ३७ था। इम्तहान का नतीजा अबतक उसको नहीं मिला इसी से उसका नतीजा जानने के लिये बहुतही उत्कण्ठित है। दो चिट्ठी भी उसने रजिष्ट्रार के पास भेजीं मगर किसी का उत्तर न मिला। इसी से सेवक की यह प्रार्थना है कि जब मेरी चिट्ठी आप के कर कमल में पहुंचे तभी अखबार (गज़ट) से निश्चय कर इम्तहान का नतीजा लिखना चाहिये। फ़ेल होने की हालत में किस मजमून में गिरा | गुरवः! ममैकेन भजनलालशर्म्मणा विद्यार्थिना गतसंस्कृतपरीक्षायां विशारदपरीक्षा दत्ता तत्र परीक्षकेषु तस्य गणना (रोलनम्बर) सप्तत्रिंशत्तमाऽऽसीत्। परीक्षाफलं तु तेनाद्यावधि नलब्धमत एवातीवोत्कण्ठितोऽस्ति तत्फलपरिज्ञानाय। द्वे पत्रेऽपि तेन रजिस्ट्रारसन्निधौ प्रेषिते परञ्च न कस्याप्युत्तरं लब्धं। अतएवास्याभ्यर्थनैषा सेवकस्य यदा मम दलं श्रीमत्करकमलगतं भवेत् तत्क्षणमेव समाचारपत्राण्यधिगत्य परीक्षाफलं लेखनीयम् अनुत्तीर्णदशायां कस्मिन्विषये पतित इत्यपि सूचनीयं श्रीमद्भिः परोपकारिभिर्गुरुजनैः यावच्छक्यं शीघ्र- |

अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, प्रहेलिकाश्च ।

| हिन्दी । | संस्कृत । |
|---|---|
| यह भी श्रीमान् परोपकारी गुरुजन सूचित करें। जहां तक हो सकेगा शीघ्रही उत्तर इस सेवक को मिलेगा यह मानाजाता है.<br>आप का सेवक<br>सुखानन्द त्रिपाठी | शीघ्रोत्तरं लप्स्यते ऽयमनुचरइतिमन्यते.<br>भवतामनुचरः<br>सुखानन्दत्रिपाठी. |
| दिल्ली<br>६।१२।०३<br>आप को प्रणाम करके.<br>अमृतसर निवासी चुन्नीलाल शर्मा अपनी राय प्रकाश करता है कि हे श्रीमान् अब संस्कृत भाषा निस्सार है इससे अङ्गरेज़ी भाषाही फेंटा बांध कर आप को पढ़नी चाहिये उसी से आप के सब मनोरथ सिद्ध होंगे वरन विशारद परीक्षा पास करके भी मुनासिब जगह का मिलना नामुम्किन है, मुम्किन भी हुआ तो २५) से अधिक जन्म भर मुम्किन नहीं । जो संस्कृत में आप का बहुतही आग्रह है तो शास्त्रीपरीक्षा में यत्न करना चाहिये। वह परीक्षा दृढ़ उद्योग से आप से पांच छः महीने में ही पास करली जायगी और मैं भी उस में मदद दूंगा। छुट्टी के दिनों में मैं कहां जाऊंगा यह निश्चय नहीं.<br>आपका मित्र चुन्नीलाल शास्त्री<br>(मिशनस्कूल देहली) | इन्द्रप्रस्थ<br>६।१२।०३<br>तत्रभवत्सु प्रणम्य.<br>प्रकटयति स्वसम्मतिममृतसरनिवासी चुन्नीलालशर्म्मा, तथाहि, श्रीमन्तः! निःसारा साम्प्रतं संस्कृतभाषाऽतइङ्गलिशभाषैव बद्धपरिकरैरत्रभवद्भिः संवर्द्धनीया तयैव सेत्स्यन्ति सर्वे वो मनोरथाः किञ्च विशारदपरीक्षामुत्तीर्य्यापि नानुकूलस्थानप्राप्तिसम्भवः, सम्भवेऽपि पञ्चविंशतेरधिकस्याजन्मासम्भवः । यदि संस्कृतेऽतीवाग्रहो भवतां तदा शास्त्रिपरीक्षायां यतितव्यं साच दृढोद्योगैः श्रीमद्भिः पञ्चषैरेव मासैरुत्तीर्णाभविष्यति दास्यामिच तत्राहमपिसाहाय्यमिति । अथकाशदिनेषु क्वयास्यामीति न निश्चयः.<br>भवदीयो वयस्यः चुन्नीलालशास्त्री<br>(मिशनस्कूल देहली) |

## अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, मल्लिकाश्च ।

| हिन्दी । | संस्कृत । |
|---|---|
| दूसरी अर्ज़ी हेडमास्टर साहब के लिये । | अन्यन्निवेदनपत्रमिदं पाठशालाध्यक्षं प्रति. |
| श्रीमान् परमदयालु हमारे हेडमास्टर महाशय चिरञ्जीव रहो. | श्रीमत्परमदयालुनामस्मत्पाठशालाध्यक्षमहाशयानामग्रेऽभ्यर्थनेयम्. |
| प्रभो ! | प्रभो ! |
| गुज़ारिश यह है कि मैं पिछली आधीरात से पेट में शूल के दर्द और शिर के दर्द में मुब्तिला हूं इसलिये मदर्से में जाने और वहां बैठने के लिये समर्थ नहीं हूं । महर्बानी कर आज कीही छुट्टी मन्ज़ूर फ़र्माइये यह मेरी आप के सामने प्रार्थना है. | अस्ति सविनयनिवेदनमेतद्यदहं गतार्धरात्रित उदरशूलमस्तः शिरोवेदनया च पीडितोऽस्म्यतः पाठशालां गन्तुं तत्र स्थातुञ्च न शक्नोमि। कृपयाऽद्यैव दिवसस्यावकाशं स्वीकर्तुमर्हन्ति भवन्त इतीयमस्माकमभ्यर्थना श्रीमतामग्रे. |
| मेरे बेटे का यह लिखना ठीक है (यह लड़के के पिता की कैफ़ियत है) दस्तख़त राम प्रसाद शर्मा. | सत्येयमुक्तिर्मम पुत्रस्येतिज्ञापयितुरस्य पितुर्हस्ताक्षराणि रामचन्द्रशर्मणः. |
| आपका सेवक गोपाल प्रसाद शर्मा<br>१५।१।०५ ऐन्ट्रेन्स क्लास. | श्रीमतामनुचरः दशमकक्षास्थः<br>१५।१।०५ गोपालप्रसादशर्मा. |
| ——*—— | ——*—— |
| इक़रार नामा । | प्रतिज्ञापत्रमिदम् । |
| मैं मुसम्मी हरदत्त शर्मा वल्द पण्डित दुर्गादत्त क़ौम ब्राह्मण साकिन अलीगढ़ का हूं अपने बेटे की शादी के लिये १५० रुपये जिन के आधे ७५ रुपये होते हैं लाला रामचन्द्र वल्द गोपाल दास क़ौम बनिया साकिन मेरठ से क़र्ज़ लेता हू और वाइदा | श्रीमद्विप्रवंशावतंस अलीगढ़वास्तव्यदुर्गादत्तसूनुर्हरदत्तशर्माऽहं स्वपुत्रविवाहार्थं मुद्राणां सार्धशतं यदर्धं पञ्चसप्ततिमुद्रा भवन्ति मयराष्ट्रनगरनिवासिवैश्यवंशोत्पन्नगोपालदाससूनवे रामचन्द्रायोपरोक्तं द्रव्यं धारयामि प्रतिजाने चैकस्य वत्सरस्यान्ते शतस्प्र- |

अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, प्रहेलिकाश्च ।

| हिन्दी । | संस्कृत । |
|---|---|
| कर्ता हूं कि एक साल के अखीर में ढाईरुपये सैकड़े के सूद के साथ कुल धन दे दूंगा न देने की हालत में मैं अपना घरही आड़ किये देता हूं। लिहाज़ा यह इक़रार नामा लिख दिया ताकि सनद रहे. | ति सार्धद्वयरूपकेण कुसीदेन सहाखिलं रिक्थं प्रतिदास्यामि अनर्पणदशायां मम गेहमेव पणत्वेन धृतमिति प्रतिज्ञापत्रीलिखितं प्रमाणत्वेनेदम्. |
| गवाह श्रीकृष्णदत्त — दस्तखत हरिदत्त शर्मा बकलम खुद | श्रीकृष्णदत्तः (साक्षी) — हस्ताक्षराणि- हरिदत्त शर्मणः(स्वयं) |
| अब मशहूर छन्दों का लक्षण कहता हूं. | अथ प्रसिद्धवृत्तानां लक्षणं ब्रवीमि. |
| मात्रावाला—आर्या छन्द है. | मात्रात्मकं—आर्या छन्दः. |
| जिसके पहिले चरण में तैसेही तीसरे में १२मात्रा हों और दूसरे में अठारह और चौथे चरण में १५ हों वह आर्या छन्द होता है. | यस्याः पादे प्रथमे, द्वादशमात्रास्तथा तृतीयेऽपि अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या. |
| अब अक्षरात्मक छन्द बयान किये जाते हैं | अक्षरात्मकानि छन्दांसि वर्ण्यन्तेऽधुना. |
| ८ अक्षर का अनुष्टुप् छन्द है उसका लक्षण, श्लोक में छठा गुरु, पाँचवा सब जगह लघु, दूसरे और चौथे चरणों में सातवां ह्रस्व और पहिले तीसरे में सातवां दीर्घ जानना. | ८ अष्टाक्षराणामनुष्टुप्छन्दः तल्लक्षणम् श्लोके षष्ठं गुरुज्ञेयं सर्वत्र लघुपञ्चमम् द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः. |
| ११ अक्षरों के इन्द्रवज्रा वगैरह पांच छन्द हैं. | ११ एकादशाक्षराणां पञ्चछन्दांसि इन्द्रवज्रादीनि. |
| ,, इन्द्रवज्रा–दो तगण, एक जगण, दो गुरु, जिसके एक चरण में हों. | ,, इन्द्रवज्रा—स्यादिन्द्रवज्रा यदि तौ जगौ गः. |

अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, महोल्लिकाश्च ।

| हिन्दी । | संस्कृत । |
|---|---|
| ,, उपेन्द्रवज्रा—ज, त, ज, ग, ग जहाँ हों. | ,, उपेन्द्रवज्रा—उपेन्द्रवज्रा जतजास्ततो गौ. |
| ,, उपजाति—जिसमें इन्द्रवज्रा और उपेन्द्रवज्रा के क्रम से लक्षण हों. | ,, उपजातिः-अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः. |
| ,, रथोद्धता-र, न, र, ल, ग जिसके १ पाद में हों. | ,, रथोद्धता—रान्नराविह रथोद्धता लगौ. |
| ,, स्वागता—र, न, भ, ग, ग जिसके १ पाद में हों. | ,, स्वागता—स्वागतेति रनभाद्गुरुयुग्मम्. |
| १२ अक्षरों के पादवाला एक छन्द वंशस्थ नाम है. | १२ द्वादशाक्षराणामेकं छन्दः वंशस्थनाम. |
| ,, वंशस्थ—ज, त, ज, र जिसके एक पाद में हों. | वंशस्थम् जतौ तु वंशस्थमुदीरितं जरौ. |
| बारह तेरह अक्षरों का मिला हुआ पुष्पिताग्रा छन्द है. | द्वादशत्रयोदशाक्षराणां मिश्रीभूतं पुष्पिताग्रावृत्तम्. |
| १२, १३ पुष्पिताग्रा छन्द { जिसके पहिले तीसरे पाद में न, न, र, य हों और दूसरे चौथे में न, ज, ज, र, ग हों. | १२, १३ पुष्पिताग्रा वृत्तम् { अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा. |
| तेरह अक्षर के पादवाले दो छन्द रुचिरा और प्रहर्षिणी हैं. | त्रयोदशाक्षराणां द्वे वृत्ते—रुचिरा प्रहर्षिणीति. |
| १३ रुचिरा—जिसमें ज, भ, स, ज, ग हों और चार और नौ अक्षरों पर विराम हो. | १३ रुचिरा—चतुर्ग्रहैरिह रुचिरा जभौ सजौ गः. |
| १३ प्रहर्षिणी—जिसमें म, न, ज, र, ग हों और ३ और १० पर विराम हो. | ,, प्रहर्षिणी—म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्. |
| चौदह अक्षरों का वसन्ततिलक नाम एक छन्द है. | चतुर्दशाक्षराणामेकं वृत्तं—वसन्ततिलकाख्यं. |

## अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, प्रहेलिकाश्च।

| हिन्दी। | संस्कृत। |
|---|---|
| १४ वसन्ततिलक—त, भ, ज, ज, ग, ग जिसमें हों. | १४ वसन्ततिलका—उक्ता वसन्ततिलका तभजा जगौ गः. |
| पन्द्रह अक्षरों का एक छन्द मालिनी. | पञ्चदशवर्णानामेकं वृत्त—मालिनी. |
| १५ मालिनी—न, न, म, य, य जिसमें हो और ८ और ७ पर विराम हो. | १५ मालिनी—ननमयययुतेयं मालिनी भोगिलोकैः. |
| सोलह अक्षरों का है तो लेकिन अप्रसिद्ध है. | षोडशाक्षराणामस्ति तु परञ्चाप्रसिद्धम्. |
| सत्रह अक्षरों के तीन है हरिणी, शिखरिणी और मन्दाक्रान्ता. | सप्तदशाक्षराणां त्रीणि-हरिणी, शिखरिणीमन्दाक्रान्तेति. |
| १७ हरिणी—जिसमें न, स, म, र, स, ल, ग हो और छः चार और दस अक्षर पर विराम हो. | १७ हरिणी—रसयुगहयैन्सौ म्रौ स्लौ गो यदा हरिणी तदा. |
| १७ शिखरिणी—जिसमें ६ और ११ पर विराम और य, म, न, स, भ, ल, ग हों. | ,, शिखरिणी—रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी. |
| ,, मन्दाक्रान्ता-जिसमें ४ ६ और ७ पर विराम हो और म,भ,न,त,त,ग,ग हों. | ,, मन्दाक्रान्ता—मन्दाक्रान्तजलधिषड गैर्म्भौ नतौ ताद्गुरुचेत्. |
| अठारह अक्षरों का अक्सर अप्रसिद्ध है. | अष्टादशाक्षराणां प्रायोऽप्रसिद्धम्. |
| उन्नीस अक्षर का एक शार्दूल विक्रीडित होता है. | एकोनविंशत्यक्षराणामेकं शार्दूलविक्रीडितम्. |
| १९ शार्दूलविक्रीडित—जहां १२ और सात पर विराम हो और म, स, ज, स, त, त, ग जिसमें हों. | १९ सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्. |
| बीस अक्षर का एक छन्द है सुवदना. | विंशत्यक्षराणामेकं वृत्तंसुवदना. |
| २० सुवदना—म, र, भ, न, य, भ, ल, ग जिसमें हों और ७, ७ और ६ पर विराम हो | २० सुवदना—ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौगः सुवदना. |
| इक्कीस अक्षर का स्रग्धरा छन्द है. | एकविंशत्यक्षरात्मकं स्रग्धरावृत्तम्. |

## अभिनन्दनपत्राणि, निवेदनपत्राणि, पद्याणि, छन्दोबोधः, प्रहेलिकाश्च ।

| हिन्दी । | संस्कृत । |
|---|---|
| २१ स्रग्धरा—जिसमें ७, ७, ७ पर विराम हो और म, र, भ, न य, य, य ये हों. | २१ म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम. |
| अपरवक्त्र— | अपरवक्त्रम् |
| जिसके विषम अर्थात् पहिले तीसरे पाद में न, न, र, ल, ग हों और सम अर्थात् दूसरे चौथे में न, ज, ज, र हों. | अयुजि ननरलागुरुः समे तज्जभपर वक्त्रमिदं जनेजरौ. |
| ( अब समस्या का पूरण करना ) | ( अथ समस्यापूरणम् ) |
| श्रीरामचन्द्र महाराज के अभिषेक में मद से विह्वल हुई (किसी) तरुणी के हाथ से गिरा हुआ स्वर्ण घट सोपान (ज़ीना) मार्ग में ठठ इत्यादि शब्द करता है. | रामाभिषेके मदविह्वलाया हस्ताच्च्युतो हेमघटस्तरुण्याः । सोपानमार्गे प्रकरोति शब्दं ठंठंठंठठठठठठठः । |
| यह चौथे पाद की समस्यापूर्ति है. | अत्र चतुर्थपादसमस्यापूर्तिः |
| * ( सबके दो ) सुमति और कुमति सम्पत्ति और आपत्ति का कारण होती है. | * सर्वस्य द्वे सुमतिकुमती सम्पदापत्तिहेतू. |
| * ( एक ही गोत्र में ) समर्थ पुरुष होता है जो कुटुम्ब को पालता है. | * एको गोत्रे प्रभवति पुमान् यः कुटुम्बं बिभर्ति. |
| * ( बूढ़ा, जवान के ) साथ परिचय से स्त्रियों से त्याग दिया जाता है. | * वृद्धो यूना सह परिचयात् त्यज्यते कामिनीभिः. |
| * स्त्री, पुरुष की तुल्य जब प्रभु हो जाय तभी वह घर नष्ट जानो. | * स्त्री पुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम् । १ |
| ( पहेलियां ) | ( प्रहेलिकाश्च ) |
| दूर जाय पर पग नहीं, साक्षर पण्डित नाहिं । बेमुख स्फुट बोले सदा जान सो पण्डित माँहि ॥ ( चिट्ठी ). | अपदो दूरगामी च साऽक्षरो न च पण्डितः अमुखः स्फुटवक्ता च यो जानाति स पण्डितः । २ ( पत्रम् ) |
| * ये चार पाणिनि महाराज के सूत्र हैं इन सूत्रों को ही अवलम्बन कर किसी कवि ने समस्या पूरण की है. | * इमानि चत्वारि पाणिनेः सूत्राणि, एतान्येवावलम्ब्य केनचित्कविना समस्यापूर्तिः कृता. |

## अभिनन्दनपत्राणि, निवेदनपत्राणि, पत्राणि, छन्दोबोधः, प्रहेलिकाश्च।

| हिन्दी। | संस्कृत। |
|---|---|
| एक आंख पर काक नहिं, बिल चाहे नहिं सर्प। घटे बढ़े जलधी न शशी कहो जो रावरी दर्प॥ (सुई) | एकचक्षुर्न काकोऽयं बिलमिच्छन्न पन्नगः क्षीयते वर्धते चैव न समुद्रो न चन्द्रमाः। ३ (सूचिका) |
| वृक्ष अग्रवासी न खग, तीन नेत्र नाहिं शर्व। वल्कल धारी सिद्ध नहिं, जल धारी नहिं अभ्र॥ (नारियल.) | वृक्षाग्रवासी नच पक्षिराजस्त्रिनेत्रधारी नच शूलपाणिः त्वग्वस्त्रधारी नच सिद्धयोगी जलं च बिभ्रन्न घटो नमेघः।४। (नारिकेलफल) |
| अस्थि नहीं और सिर नहीं, वे अङ्गुलि की बाँह। नहिं पदयुग पर आपही दृढ़ चिपटे वपुमांहि॥ (अंगरखा.) | अस्थि नास्ति शिरो नास्ति बाहुरस्ति निरङ्गुलिः नास्ति पादद्वयं गाढमङ्गमालिङ्गति स्वयम् (५) (कञ्चुकः) |
| आदि नहीं जेहि अन्त नहिं, बीच में ठहरे जोय। है तेरे मेरे भी वह, कह सुनाय जो होय॥ (आंख.) | न तस्यादिर्न तस्यान्तो मध्ये यस्तस्य तिष्ठति तवाप्यस्ति ममाप्यस्ति यदि जानासि तद्वद ६ (नयनम्.) |
| पैदा हुई नरनारि से, देह रहित वह नारि। वेमुख पर बोले अधिक, जात मात्र विनशाहि। (चुटकी.) | नरनारी समुत्पन्ना सा स्त्री देहविवर्जिता। अमुखी कुरुते शब्दं जातमात्रा विनश्यति छोटिका (चुटकी.), |
| काली क्या है (कौओं की पंक्ति); मीठी या प्रियक्या है (स्त्री); शीतल बहनेवाली गङ्गा कौन सी है (काशी के नीचे बहनेवाली); किसको कृष्ण ने मारा (कंसको); किसको शीत नहीं सताता (कम्बल वाले को)। | काकाली, का मधुरा काशीतलवाहिनी गङ्गा। कसंजघान कृष्णः कंबलवन्तं न बाधते शीतः।१। |
| इसी श्लोक में सवाल जवाब हैं किम् शब्दको अलग करके पढ़ने में प्रश्न हैं और उसे मिलाकर पढ़ने में उत्तर है. | अस्मिन् श्लोक एव प्रश्नोत्तरे स्तः किम् शब्दस्य-पृथक्पठने प्रश्नः तत्संयोज्यपठने उत्तरम्. |

## चौवीसवां अध्याय—चतुर्विंशोऽध्यायः ।

### गृहचर्याचन्द्रोदयादुद्धृता दिनचर्यारात्रिचर्याच ।

| हिन्दी । | संस्कृत । |
|---|---|
| अथ प्रातःकाल सेही दिन का कृत्य कहते हैं. | अथ प्रातःकालादेव दिनकृत्यमाह. |
| सम्पूर्ण पापों की शांति चाहने वाला और आयु की रक्षा चाहने वाला मनुष्य चार घड़ी के तड़के उठकर अपने इष्टदेव का स्मरण करे तब महाभारत में श्रीमद्वेदव्यासकृत प्रातःस्मरणीय स्तोत्र को पढ़े औ यह "महर्षि भगवान् वेदव्यास धर्मात्मा चार श्लोकों से इस संहिता को पहिले बनाकर अपने पुत्र शुकदेव को पढ़ाते हुए।१। हजारों माता पिता और सैकड़ों पुत्र और स्त्री संसार में देखेगये देखेजाते हैं और देखे जायंगे।२। हजारों शोक की जगह सैकड़ों भय की जगह हर रोज मूढ़ को मालूम होती हैं पण्डित को नहीं।३। भुजा उठाकर मैं चिल्लाता हूं और कोई मेरी नहीं सुनता धर्म से अर्थ और काम होते हैं यह किसलिये सेवन नहीं कियाजाता।४। मनुष्य न कभी कामना से न भय से न लोभ से जीवन के लिये भी धर्म | सर्वाघशान्त्यर्थी, आयुषोरक्षार्थी च मनुष्यो ब्राह्मे मुहूर्त उत्थाय स्वेष्टदेवं स्मरेत् तत श्रीमद्वेदव्यासकृतं महाभारतान्तर्गतं प्रातःस्मरणीय "महर्षिर्भगवान्व्यासः कृत्वेमां संहितां पुरा श्लोकैश्चतुर्भिर्धर्मात्मा पुत्रमध्यापयच्छुकम्।१। माता पितृसहस्राणि पुत्रदारशतानि चासंसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे।२। शोकस्थानसहस्राणि भयस्थानशतानि च। दिवसे दिवसे मूढमाविशन्ति न पण्डितम्।३। ऊर्ध्वबाहुर्विरौम्येष नच कश्चिच्छृणोति मे धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते।४। न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः धर्मो नित्यः सुखदुःखेत्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः।५। इमां भारतसावित्रीं प्रातः प्रातः पठेत्तु यः स भारतफलं प्राप्य परं ब्रह्माधिगच्छति"।६। पठेत्। तदनन्तरं |

## बृहच्चर्याचन्द्रोदयादुद्धृता दिनचर्यारात्रिचर्याच ।

| हिन्दी । | संस्कृत । |
| --- | --- |
| को न छोड़े क्योंकि धर्म नित्य है और सुख दुःख अनित्य हैं तैसेही जीव नित्य है और इस का हेतु अनित्य है ।५। हररोज़ सवेरे जो मनुष्य भारतसावित्री को पढ़ेगा वह महाभारत का फल प्राप्त करके परब्रह्म को प्राप्त होगा। इस के अनन्तर " पवित्रकीर्ति राजानल, पवित्रकीर्ति राजा युधिष्ठिर और पवित्रकीर्ति श्रीजानकीजी और पवित्रकीर्ति श्रीभगवान" स्मरण करे फिर "अश्वत्थामा, बलि, व्यास, हनूमान् और विभीषण कृपाचार्य और परशुराम ये सात चिरंजीवी हैं इन सातों को तथा आठवें मार्कण्डेय ऋषि को जो स्मरण करता है वह सम्पूर्ण व्याधियों से रहित हुआ सौ वर्ष जीता है"। फिर "अहल्या द्रौपदी, सीता, कुन्ती तथा मन्दोदरी इन पांचों को जो नित्य स्मरण करता है महापातक का नाश करने वाला है." | "पुण्यश्लोको नलोराजा पुण्यश्लोको युधिष्ठिरः पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः" अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविन ॥ सप्तैतान्संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् । जीवेद्वर्षशतं सोऽपि सर्वव्याधिविवर्जितः ॥ पुनः, अहल्याद्रौपदी सीता, कुन्ती मन्दोदरी तथा । पञ्चकन्या स्मरेन्नित्यं, महापातकनाशनम्. |
| फिर खोटे स्वप्न के फल को दूर करने वाला यह श्लोक पढ़े— | पुनः दुःस्वप्ननाशनमिमं श्लोकं पठेत्. |
| काशी की उत्तर दिशा में कुक्कुट नाम का एक द्विज है उसके स्मरण सेही दुःस्वप्न सुस्वप्न होजाता है. | काशीत उत्तरे भागे, कुक्कुटो नाम वै द्विजः। तस्य स्मरणमात्रेण, दुःस्वप्नः सुस्वप्नो भवेत्. |

## गृहचर्याचन्द्रोदयादुद्धृता दिनचर्यारात्रिचर्या च।

### हिन्दी।

तब मनुष्य सवेरे उठ कर दही, घी दर्पण, सफ़ेद सरसों, बेल, सोना, माला घोड़ा हाथी, गौ ब्राह्मण हलदी, दूध इनको या इन में से किसी को देखे। न कि अधर्मी, कुत्ता, बिल्ली इत्यादि को, यदि ये चीज पास में नहीं तो अपनेही हाथ देख ले.

इसके बाद गाँव से या नगर से बाहर नैऋत दिशा में शूरवीर के बाण जाने की दूरतक (कमसेकम २००-कदम) शुद्ध मिट्टी और जल पात्र लेकर कीड़े मकोड़े से रहित जगह में जाकर मिट्टी और जल का बर्तन रख कर यज्ञ में काम न आनेवाले सूखे तिनकों से जमीन को ढककर कर्ण या कंठ में यज्ञोपवीत लटका चुप चाप नाक और मुंह मूंद कर दिन में उत्तर को मुंह कर रात में दक्षिण की ओर मुंह कर पाखाना पेशाब फिर, ढेले इत्यादि से गुदा साफ कर और वहां से उठकर पहिले लाये हुए मिट्टी और जल पात्र लेकर गील आमले के बराबर मिट्टी ले जल से दोबार इन्द्रिय को साफ कर फिर मिट्टी और जल से तीन

### संस्कृत।

ततो जनः प्रातरुत्थाय दधि, आज्यं, मुकुरं सिद्धार्थं (श्वेतसर्षपं) बिल्वं, स्वर्णम् स्रज. अश्वं गजं, गां, विप्रं, हरिद्रां, दुग्धमेतेष्वन्यतमं वा पश्येत् नत्वधर्मिण श्वानं मार्जारादिकं यद्येतानि वस्तून्यभ्याशस्थानि नस्युस्तदावास्वहस्तावेवावलोकयेत्.

तदनन्तरं ग्रामान्नगराद्वा बहिर्नैऋत्यां वीरेषुक्षेपणास्पदं शुद्धमृदं वारिपात्रमादाय कीटादिशून्यस्थलं गत्वा मृत्तिकां जलपात्रं च निधायायज्ञियैः शुष्कैस्तृणैर्धरामाच्छाद्यप्रावृतशिराः कण्ठलम्बितयज्ञोपवीतः तूर्ष्णीं प्राणास्येपिधाय दिवोदङ्मुखो नक्तं दक्षिणामुखो मूत्रपुरीष उत्सृज्य लोष्टादिना गुदं परिमृज्योत्थाय पूर्वगृहीतमृज्जलपात्रे गृहीत्वार्द्रामलकमात्रमृज्जलैर्द्विवारं शिश्नशौचं कृत्वा पुनर्मृज्जलैस्त्रिवारमपानं संशोध्य पुनर्जलेनैव लिङ्गगुदे प्रक्षाल्य शुद्धमृत्तिकयैकवारं हस्तं प्रक्षाल्य शुद्धभूमिभागस्थान्यमृज्जलेन दशवारं वामकरं प्रक्षाल्य ततः करद्वयं सप्तवारं मृज्जलैः प्रक्षाल्य पादावपि अनयैव रीत्या त्रिः प्रक्षाल्यान्यजलेन द्वाद-

## बृहच्चर्याचन्द्रोदयादुद्धृता दिनचर्यारात्रिचर्याच।

| हिन्दी। | संस्कृत। |
| --- | --- |
| बार गुदा को शुद्ध कर फिर जल सेही लिंग और गुदा धोकर शुद्ध मिट्टी से एक बार हाथ धो और शुद्ध जगह पर आ दूसरी मिट्टी और जल से दस बार बाम हाथ को धो और फिर दोनों हाथों को सात बार मिट्टी और जल से धो, पावों को भी इसी रीति से तीन बार धो, दूसरे पानी से बारह कुल्ले बाँई तरफ़ कर जल के पात्र को तीन बार माँज जनेऊ ठीक कर दोबार आचमन करे. | शगद्धूपान्वामभागे कृत्वा जलपात्रं वि-पर्युक्ष्य उपवीती द्विराचामेत्. |
| अब दाँतन करना—दाँतन, बारह अंगुल चौड़ी और कनी उंगली के नौंक की बराबर मोटी, सीधी, बिना गांठ या खखोडर की करनी चाहिये। एक २ दांत को मुलायम कूंची से या दातों को शुद्ध करने वाले मञ्जन से मसूड़ों पर जोर न देता हुआ, घिसे. | अथ दन्तधावनं—भक्षयेद्दन्तपवनं द्वादशाङ्गुलमायतं कनिष्ठिकाग्रवत् स्थूलमृज्वग्रन्थितवाव्रणं एकैकंघर्षयेद्दन्तं मृदुना कूर्चकेन च, दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन्. |
| त्रिकुटा में शहद मिलाकर या तेल और सेंधा नमक मिलाकर या तेजोवती चूर्ण से दांत नित्य साफ़ करे. | क्षौद्रत्रिकटुकाक्तेन तैलसिन्धुभवेन वा चूर्णेन तेजोवत्याश्च दन्तान्नित्य विशोधयेत्. |
| अब दांतन के योग्य लकड़ी वर्णन करते हैं. | अथ दन्तधावनार्हाणि काष्ठान्याह. |
| आक की लकड़ी में वीर्य, बड़ में दीप्ति, कञ्जा में विजय, पिलखन में धन | अर्के वीर्यं वटे दीप्तिः करञ्जे विजयो भवेत् प्लक्षे चैवार्थसम्पत्तिर्बदर्यां म- |

## बृहच्चर्याचन्द्रोदयादुद्धृता दिनचर्यारात्रिचर्या च ।

| हिन्दी । | संस्कृत । |
|---|---|
| दौलत, बेर में मीठी आवाज़, खैर में मुख की सुगन्ध, बेल में बहुतसा धन, गूलर में वाणी की सिद्धि, आम में आरोग्यता, कदम में धैर्य और बुद्धि और चम्पा में दृढ़ मति, सिरस में कीर्ति, सौभाग्य, उम्र, और आरोग्यता; आंगा में धैर्य, बुद्धि, प्रज्ञा शक्ति तैसेही आवाज़; अनार में सुन्दर आकार, ककुभ (अर्जुन) कुड़ा में तैसेही, जाती, तगर और मन्दार इन से खोटा स्वप्न नाश होता है. | धुरे ध्वनिः खदिरे मुखसौगन्ध्यं बिल्वे तु विपुलं धनं उदुम्बरं तु वाक्सिद्धिराम्रे त्वारोग्यमेव च कदम्बे तु धृतिर्मेधा, चम्पके तु दृढा मतिः शिरीषे कीर्तिसौभाग्यमायुरारोग्यमेव च अपामार्गे धृतिर्मेधा प्रज्ञा शक्तिस्तथा ध्वनिः दाडिम्यां सुन्दराकारः ककुभे कुटजे तथा, जातीतगरमन्दारैर्दुःस्वप्नञ्च विनश्यति. |
| और लकड़ी निषिद्ध है। अब अन्दाज सुनो. | निषिद्धान्यन्यानि काष्ठानि। अथ प्रमाणं शृणु. |
| ब्राह्मणों की दातन १२ अंगुल की, और क्षत्रियों की १० अंगुल की, वैश्यों की १८ अंगुल की और शूद्रों की ६ अंगुल की होती है. | द्वादशाङ्गुलं विप्राणां क्षत्रियाणां दशाङ्गुलं अष्टाङ्गुलञ्च वैश्यानां शूद्राणान्तु षडङ्गुलम्. |
| स्त्रियों की दातन उससे चौथाई अंगुल लेनी चाहिये. | दन्तकाष्ठन्तु गृह्णीयात् स्त्रीणां तच्चतुरङ्गुलं. |
| अब कुल्ला करने की तरकीब लिखी जाती है. | अथ गण्डूषविधिर्लिख्यते. |
| बारह शौचानन्तर, और पेशाब जाने पीछे चार और भोजन के पीछे १६ कुल्ले करे. | कुर्याद्द्वादशगण्डूषान् पुरीषोत्सर्जने ततः मूत्रोत्सर्गे च चतुरो भोजनान्ते तु षोडशः. |

## बृहच्चर्याचन्द्रोदयादुद्धृता दिनचर्यारात्रिचर्या च ।

| हिन्दी । | संस्कृत । |
| --- | --- |
| तब मनुष्य स्नान, स्नान के पीछे सन्ध्यावन्दन और अपने इष्ट देव का पूजन उसके पीछे यथा शक्ति गायत्री का जाप और * पांच महा यज्ञ करे. | ततो जनः स्नानं, स्नानानन्तरं सन्ध्यवन्दनं स्वेष्टदेवार्चनं तत्पश्चाद्गायत्रीजापं * पञ्चमहायज्ञांश्च समाचरेत्. |
| तब भोजन के आदि में मंगलीक वस्तुओं का जैसे अग्नि, गौ, जल, ब्राह्मण सोना, घी, सूर्य, और राजा इन का दर्शन और परिक्रमा करे। तब बलिवैश्वदेव और भोजन का ईश्वरार्पण "ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतं ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितं भक्ष्यभोज्यंत्वया नित्यं नैवेद्यं प्रतिगृह्यतां पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः" "विश्वात्मा प्रीयतां" इत्यादि वाक्यों से करना। इसके अनन्तर भोजन पहिले मीठी चीज़ों का उसके बाद औरों का, खाकर सौ पैंड चल ले फिर खाट पर सीधा लेटा हुआ आठ उसास ले और उसके दुगुने दाहिनी करवट में और उनके दुगुने बाईं करवट में | ततो भोजनादौ माङ्गल्यवस्तूनां यथा अग्निगोजलब्राह्मणस्वर्णघृतादित्यराज्ञां दर्शनं प्रदक्षिणञ्च कुर्यात् ततो बलिवैश्वदेवं भोजनस्येश्वरार्पणञ्च "ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतं ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितं भक्ष्यभोज्यंत्वया नित्यं नैवेद्यं प्रतिगृह्यतां, पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति, तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः" विश्वात्मा प्रीयतामित्यादि वाक्यैः" कुर्यात् ततो भोजनं मिष्टवस्तूनां प्रथमं तदनन्तरमन्येषाम्; भुक्त्वा शतपदं गच्छेत् पुनः शय्यायां श्वासानष्टौ समुत्तानस्तान् द्विः पार्श्वे तु दक्षिणे ततस्तद्द्विगुणान्वामे पश्चात्सुप्याद्यथा सुखं ग्रीष्मर्तौ तु दिवाशयनं सुखप्रदं प्रायशः पित्त- |
| * पहिले अध्याय में स्पष्टरीति से देखो. | * नोट प्रथमे ऽध्याये स्फुट पश्यत . |

## बृहच्चर्याचन्द्रोदयादुद्धृता दिनचर्यारात्रिचर्या च ।

| हिन्दी । | संस्कृत । |
| --- | --- |
| पीछे चाहे जैसे सोवे। ग्रीष्म ऋतु में दिन को सोना सुख देने वाला है और अक्सर पित्त मिजाज़ वालों को बहुत ज़रूरी है और दूसरी ऋतु ओं में दिनका सोना मना है. | प्रकृतीनाञ्चात्यावश्यकमन्यर्तुषु च दिवास्वापो निषिद्धः. |
| तिस के बाद घर के काम और उनके अभाव में भक्ति रस में पगेहुए पारमार्थिक ग्रन्थों को शाम तक पढ़े या सुना करे. | तदनन्तरं गृहकृत्यान् तदभावे भक्तिरसाक्तान्पारमार्थिकान्ग्रन्थान् यावत्सन्ध्यासमय पठेच्छृणुयाद्वा. |
| फिर पहिलीही तरकीब से शौचादि काम करके सायंकाल को सन्ध्या करे सन्ध्या समय भोजन, स्त्री प्रसंग, सोना पढ़ना, लिखना, रास्ता चलना ये काम छोड़ दे। दीये जलने के पीछे कोई धर्म पुस्तक वग़ैरह पढ़ कर और ईश्वर के गुणानुवाद गाकर या सुन कर सूक्ष्म भोजन करे. | ततः पूर्वेणैव विधिना शौचादिकं कृत्वा सायं सन्ध्यामुपासीत । सायं काले आहारं मैथुनं निद्रां सम्पाठं मार्गगमनमेतानि कर्माणि वर्जयेत् । दीपप्रज्वलनानन्तरं कानिचित्सद्पुस्तकानि पठित्वेश्वरगुणानुवादांश्च गात्वा श्रुत्वा वा लघु भोजनं कुर्वीत. |
| तब दूसरे पहर के आने पर कामशास्त्र में कहे हुए दिनों में ही[1] क्रीड़ा घर में जाय वहां पहिले पाँव धोकर खाट को वैदिक गारुड़ी मन्त्रों से अभिमन्त्रित कर लठिया, जल का पात्र | ततो द्वितीये प्रहरागमे कामशास्त्रप्रोक्तेष्वेव दिवसेषु[1] रतिमन्दिरं प्रजेत। तत्र पूर्वं पादौ प्रक्षाल्य शय्यां वैदिकैर्गारुडै र्मन्त्रैरभिमन्त्र्य वेणुदण्डमम्बुपात्रञ्चान्यानि पुष्पादीनि रम्या- |
| १ नोट अमावस पूर्ण्यो को छोड़ ऋतु से समतिथि ४, ६ इत्यादि में रवि, मगल, गुरुवार को और पुरुष नक्षत्रों में ग्राम्यधर्म श्रेष्ठ है. | १ नोट पक्षद्वयपूर्णिमां हित्वा ऋतुतः समासु तिथिषुरवि कुजगुरुवारेषु, पुंनक्षत्रेषु च ग्राम्यधर्मः प्रशस्तः. |

